॥ ॐ ॥

मः लब्धि नि

અમદાવાદ--ઝાંપડાની પોળ-નિવાસી

શેઠ મોહનલાલ છોટાલાલ તરફથી

न ने ना धा

તેમનાં ધર્મપત્ની

માણેકબાઈએ

નવપદજીની ઓળી

स्वा मि य श्री

જ્ઞાન પંચમી, મૌન એકાદશી, વીશ-સ્થાનક અને રોહિણીના તપ કરેલા

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિ નિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે. વિક્રમ સં. ૧૯૮૫

म त गौ

श्रेष्ठि देवचन्द्रलालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ६५

श्रीमहोपाध्यायकीर्तिविजयशिष्य–महोपाध्याय-श्रीविनयविजयगण्युपज्ञः

# श्रीलोकप्रकाशः ।

( प्रथमविभाग–एकादशसर्गो द्रव्यलोकप्रकाशः )

मुद्रणकारिका–श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारसंस्था ।

प्रसिद्धिकारकः–जीवनचन्द्र–साकरचन्द्रः, अस्याः कार्यवाहकः ।

इदं पुस्तकं मोहमय्यां जीवनचंद-साकरचंद झवेरी इत्यनेन

निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २६–२८ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्.

वीरसम्वत् २४५२ विक्रमसंवत् १९८२ सन १९२६

प्रति १००० ] पण्यम् रु. २. [ Rs. 2-0-0

॥ श्रीजिनाय नमः ॥

श्रेष्ठिदेवचन्द्रलालभाइ–जैनपुस्तकोद्धारग्रन्थाङ्के—

श्रीमदुपाध्यायविनयविजयगण्युपज्ञे

# ॥ श्रीलोकप्रकाशे द्रव्यलोकप्रकाशे ॥

## ॥ प्रथमः सर्गः ॥

ॐ नमः परमानन्द–निधानाय महस्विने । शङ्खेश्वरपुरोत्तंस–पार्श्वनाथाय तायिने ॥ १ ॥ पिपर्त्ति सर्वदा सर्व–कामितानि स्मृतोऽपि यः । स कल्पद्रुमजित्पार्श्वो, भूयात्प्राणिप्रियङ्करः ॥ २ ॥ पार्श्वक्रमनखाः पान्तु, दीप्रदीपाङ्कुरश्रियः । भुष्टप्रत्यूहशलभाः, सर्वभावावभासिनः ॥ ३ ॥ जयन्ति व्यञ्जिताशेष–वस्तवोऽन्तस्तमोद्रुहः । गिरः सुधाकिरस्तीर्थ–कृतामद्भुतदीपिकाः ॥ ४ ॥ कृपाकटाक्षनिक्षेप–निपुणीकृतसेवका । भक्तव्यक्त–सवित्री सा, जयति श्रुतदेवता ॥ ५ ॥ जीयाज्जगद्गुरुर्विश्व–जीवातु[1]वचनामृतः । श्रीहीरविजयः सूरि–र्मदीयस्य गुरोर्गुरुः ॥ ६ ॥ श्रीकीर्त्तिविजयान् सूते, श्रीकीर्त्तिविजयाभिधः । शतकृत्वोऽनुभूतोऽयं, मन्त्रः[2] स्तादिष्ट-

१ जीवातुर्जीवनौषधम् । २ लक्ष्मीयशोविजयेत्येतत्त्रयम् ।

॥ १ ॥

सिद्धिदः ॥ ७ ॥ अस्ति लोकस्वरूपं य–द्विप्रकीर्णं श्रुताम्बुधौ । परोपकारिभिः पूर्वपंण्डितैः पिण्ड्यते स तत् ॥ ८ ॥ ततः संक्षिप्य निक्षिप्त–माम्नायैः करणादिभिः । संग्रहण्यादिसूत्रेषु, भूयिष्ठार्थं मिताक्षरम् ॥ ९ ॥ साम्प्रतं च क्रमात्प्रायः, प्राणिनो मन्दमेधसः । असुबोधमतस्तैस्तत्, कवित्वमिव बालकैः ॥ १० ॥ ततस्तदुपकृत्यै तत्, मया किञ्चिद्वितन्यते । करणोक्त्यादिकाठिन्य–मपाकृत्य यथामति ॥ ११ ॥ अयि! प्रसन्नास्ते सन्तु, सन्तः सर्वोपकारिणः । मयि प्रवृत्ते पुण्यार्थ–मविमृश्य स्वशक्यताम् ॥ १२ ॥ शिशुक्रीडागृहप्राया, ममेयं वचसां कला । निवेशनीयास्तत्रामी, कथमर्था द्विपोपमाः? ॥ १३ ॥ श्रीगुरूणां प्रसन्नाना–मचिन्त्यो महिमाऽथवा । तेजःप्रभावादादर्शे, किं न मान्ति धराधराः? ॥ १४ ॥ संक्षिप्ताः संग्रहाः प्राच्या, यथा ते सुपठा मुखे । तथा सविस्तरत्वेन, सुबोधो भवतादयम् ॥ १५ ॥ लोकप्रकाशनामानं, ग्रन्थमेनं विचक्षणाः । आद्रियध्वं जिनप्रोक्त–विश्वरूपनिरूपकम् ॥ १६ ॥ प्राप्यानुशासनमिदं समुपक्रमेऽह–मैदंयुगीनविहरद्गुरुगौतमस्य । श्रीमत्तपागणपतेर्विजयादिदेव–सूरीशितुर्विजयसिंहमुनीशितुश्च ॥ १७ ॥ मानैरङ्गुलयोजनरज्जूनां सागरस्य पल्यस्य । संख्याऽसंख्यानन्तैरुपयोगोऽस्तीह यद् भूयान् ॥ १८ ॥ आर्या । ततः प्रथमतस्तेषां, स्वरूपं किञ्चिदुच्यते । तत्राप्यादावङ्गुलानां, मानं वक्ष्ये त्रिधा च तत् ॥ १९ ॥ उत्सेधाख्यं प्रमाणाख्य–मात्माख्यं चेति तत्र च । उत्सेधात्क्रमतो वृद्धे–र्जातमुत्सेधमङ्गुलम् ॥ २० ॥ तथाहि–द्विविधः परमाणुः स्यात्, सूक्ष्मश्च व्यावहारिकः । अनन्तैरणुभिः सूक्ष्मै–रेकोऽणुर्व्यावहारिकः ॥ २१ ॥ सोऽपि तीव्रेण शस्त्रेण, द्विधा कर्तुं न शक्यते । एवं सर्वप्रमा-

प्रयोजनं अङ्गुलमानं

१५

२०

॥ १ ॥

२५

णाना-मादिमाहुर्मुनीश्वराः ॥ २२ ॥ व्यवहारनयेनैव, परमाणुरयं भवेत् । स्कन्धोऽनन्ताणुको जात-सूक्ष्मत्वो निश्चयात्पुनः ॥ २३ ॥ अनन्तव्यवहाराणु-निष्पन्नोच्छ्लक्ष्णश्लक्ष्णिका । निष्पद्यते पुनः श्लक्ष्ण-श्लक्ष्णिका ताभिरष्टभिः ॥ २४ ॥ अयं भगवत्याद्यभिप्रायो, जीवसमाससूत्रे च-परमाणू य अणंता सहिया ओसह्णस-ह्णिया एक्का । साऽणंतगुणा संती ससह्णिया सोऽणु ववहारी ॥१॥ आगमे चेयं पूर्वस्याः सकाशादनेकस्थानेष्वष्ट-गुणैव निर्णीता, अनेन त्वनन्तगुणा कुतोऽपि लिखितेति केवलिन एव वेत्तार इति तद्वृत्तौ॥ ताभिरष्टाभिरेकः स्या-दूर्ध्वरेणुर्जिनोदितः। अष्टोर्ध्वरेणुनिष्पन्न-स्त्रसरेणुरुदीरितः ॥२५॥ त्रसरेणुभिरष्टाभि-रेकः स्याद्रथरेणुकः। अष्टभिस्तैर्भवेदेकं, केशाग्रं कुरुयुग्मिनाम् ॥२६॥ ततोऽष्टघ्नं हरिवर्ष-रम्यकक्षेत्रभूस्पृशाम् । ततोऽष्टघ्नं हैमवत-हैरण्यवतयुग्मिनाम्॥२७॥तस्मादष्टगुणस्थूलं, वालस्याग्रमुदीरितम्। पूर्वापरविदेहेषु, नृणां क्षेत्रानुभावतः ॥२८॥ स्थूलमष्टगुणं चास्मा-द्भरतैरावताङ्गिनाम्। अष्टभिस्तैश्च वालाग्रै-र्लिक्षामानं भवेदिह ॥२९॥ अयं तावत्संग्रहणी-बृहद्वृत्तिप्रवचनसारोद्धारवृत्त्याद्यभिप्रायः, जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादिषु तु अष्टभिः पूर्वापरविदेहनरकेशाग्रैरेव लिक्षामानमुक्तमिति ज्ञेयं । लिक्षाष्टकमिता यूका, भवेद्यूकाभिरष्टभिः । यवमध्यं ततोऽष्टाभि-स्तैः स्यादौ-त्सेधमङ्गुलम् ॥ ३० ॥ चत्वार्युत्सेधाङ्गुलानां, शतान्यायामतो मतम् । तत्सार्द्धत्र्यङ्गुलव्यासं, प्रमाणाङ्गुल-मिष्यते ॥ ३१ ॥ प्रमाणं भरतश्चक्री, युगादौ वाऽऽदिमो जिनः । तदङ्गुलमिदं यत्तत्, प्रमाणाङ्गुलमुच्यते ॥ ३२ ॥ यदुत्सेधाङ्गुलैः पञ्च-धनुःशतसमुच्छ्रितः । आत्माङ्गुलेन चाद्योऽर्हन्, विंशाङ्गुलशतोन्मितः ॥ ३३ ॥

प्रयोजनं
अङ्गुलमानं

५

१०

१४

ततः षण्णवतिघ्नेषु, धनुःशतेषु पञ्चसु । ( अंगु० ४८००० ) शतेन विंशत्याढ्येन, भक्तेष्वासा चतुःशती ॥ ३४ ॥ यच्च काप्युक्तमौत्सेधा-त्सहस्रगुणमेव तत् । तदेकाङ्गुलविष्कम्भ-दीर्घश्रेणिविवक्षया ॥ ३५ ॥ यच्चतुःशतदीर्घायाः, सार्द्धद्व्यङ्गुलविस्तृतेः । स्यादेकाङ्गुलविस्तारा, सहस्राङ्गुलदीर्घता ॥ ३६ ॥ दृष्टान्तश्चात्र—चतुरङ्गुलदीर्घायाः, सार्द्धद्व्यङ्गुलविस्तृतेः । पट्या यथाङ्गुलव्यास-श्चीरो दैर्घ्ये दशाङ्गुलः ॥ ३७ ॥ वस्तुतः पुनरौत्सेधा-त्सार्द्धद्विगुणविस्तृतम् । चतुःशतगुणं दैर्घ्ये, प्रमाणाङ्गुलमास्थितम् ॥ ३८ ॥ एतच्च भरतादीना-मात्माङ्गुलतया मतम् । अन्यकाले त्वनियत-मानमात्माङ्गुलं भवेत् ॥ ३९ ॥ यस्मिन् काले पुमांसो ये, स्वकीयाङ्गुलमानतः । अष्टोत्तरशतोत्तुङ्गा, आत्माङ्गुलं तदङ्गुलम् ॥ ४० ॥ एतत्प्रमाणतो न्यूना-धिकानां तु यदङ्गुलम् । तत्स्यादात्माङ्गुलाभासं, न पुनः पारमार्थिकम् ॥ ४१ ॥ यदाहुः प्रवचनसारोद्धारे-"जे जंमि जुगे पुरिसा, अट्ठसयंगुलसमुस्सिआ हुंति । तेसिं जं निअमंगुल-मायंगुलमित्थ तं होइ ॥ १ ॥ जे पुण एअपमाणा, ऊणा अहिगा य तेसिमेअं तु । आयंगुलं न भण्णइ, किंतु तदाभासमेवत्ति ॥ २ ॥" प्रज्ञापनावृत्तौ तु-"जे णं जया मणूसा, तेसिं जं होइ माणरूवं तु । तं भणिअमिहायंगुल-मणिअयमाणं पुण इमं तु ॥ १ ॥" इत्येवंरूपमात्माङ्गुलं ।—परमाणू तसरेणू, रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो, अट्ठगुणविवड्ढिया कमसो ॥ २ ॥ इत्यादिरूपमुच्छ्रयाङ्गुलं । उस्सेहंगुलमेगं, हवइ पमाणंगुलं सहस्सगुणं । तं चेव दुगुणियं खलु, वीरस्सायंगुलं भणियं ॥ ३ ॥ इत्येवंरूपं प्रमाणाङ्गुलमिति ज्ञेयं ॥ उत्सेधाङ्गुलमानेन, ज्ञेयं सर्वाङ्गिनां वपुः । प्रमाणाङ्गुलमा-

प्रयोजनं अङ्गुलमानं

२०

२५

॥ २ ॥

२८

नेन, नगपृथ्व्यादिशाश्वतम् ॥ ४२ ॥ तत्रापि–तस्याङ्गुलस्य दैर्घ्येण, मीयते वसुधादिकम् । इत्याहुः केचिदन्ये च, तत्क्षेत्रगुणितेन वै ॥४३॥ तद्विष्कम्भेण केऽप्यन्ये, पक्षेष्वेतेषु च त्रिषु । ईष्टे प्रामाणिकं पक्षं, निश्चेतुं जगदीश्वरः ॥४४॥ अत्र प्रथमपक्षे एकस्मिन् योजने उत्सेधाङ्गुलनिष्पन्नानि चत्वारि योजनशतानि भवन्ति, द्वितीयपक्षे सहस्रं, तृतीये दश क्रोशा भवन्ति, परं श्रीअनुयोगद्वारचूर्णौ तृतीय एव पक्ष आदृतो दृश्यते, तथा च तद्ग्रन्थः–"जे य पमाणंगुलाओ पुढवाइप्पमाणा आणिज्जंति ते अ पमाणंगुलविक्खंभेणं आणेयवा, ण पुण सूइअंगुलेणं"ति ॥ श्रीमुनिचन्द्रसूरिकृताङ्गुलसप्ततिकायामप्युक्तं–"एयं च खित्तगुणिएण केइ एयस्स जं पुण भिणंति । अन्ने उ सूइअंगुल–माणेण न सुत्तभणियं तं ॥ १ ॥ अत्र चर्चादिविस्तरः अङ्गुलसप्ततिकातोऽवसेयः ॥ वापीकूपतडागादि–पुरदुर्गगृहादिकम् । वस्त्रपात्रविभूषादि, शय्याशस्त्रादि कृत्रिमम् ॥ ४५ ॥ इन्द्रियाणां च विषयाः, सर्वं मेयमिदं किल । आत्माङ्गुलैर्यथामान–मुचितैः स्वस्ववारके ॥ ४६ ॥ आत्मोत्सेधप्रमाणाख्यं, त्रैधमप्यङ्गुलं त्रिधा । सूच्यङ्गुलं च प्रतरा–ङ्गुलं चापि घनाङ्गुलम् ॥ ४७ ॥ एकप्रदेशबाहल्य—व्यासैकाङ्गुलदैर्घ्ययुक् । नभःप्रदेशश्रेणिर्या, सा सूच्यङ्गुलमुच्यते ॥ ४८ ॥ वस्तुतस्तदसंख्येय–प्रदेशमपि कल्प्यते । प्रदेशत्रयनिष्पन्नं, सुखावगतये नृणाम् ॥ ४९ ॥ सूची सूच्यैव गुणिता, भवति प्रतराङ्गुलम् । नवप्रादेशिकं कल्प्यं, तद्दैर्घ्यव्यासयोः समम् ॥ ५० ॥ प्रतरे सूचीगुणिते, सप्तविंशतिखाङ्शकम् । दैर्घ्यविष्कम्भबाहल्यैः, समानं स्याद् घनाङ्गुलम् ॥ ५१ ॥ उपर्युपरिप्रतरत्रये स्थापिते स्थापना ॥ ⁘⁘⁘

प्रयोजनं अङ्गुलमानं

५

१०

१४

तत्र गुणनविधिश्चैवम्–अङ्कोऽन्तिमो गुणराशे–र्गुण्यो गुणकराशिना । पुनरुत्सारितेनोपा–न्त्यादयोऽप्येवमेव च ॥५२॥ उपर्यधश्चादिमान्त्यौ, राश्योर्गुणकगुण्ययोः । कपाटसन्धिवत्स्थाप्यौ, विधिरेवमनेकधा ॥ ५३ ॥ अङ्कस्थास्थानाधिक्येन संस्थाप्यं, गुणितेऽङ्के फलं च यत् । यथास्थानक्रमङ्कानां, कार्या संकलना ततः ॥ ५४ ॥ अङ्कस्थानानि चैवम्–एकं दशशतसहस्रा–युतलक्षप्रयुतकोटयः क्रमतः । अर्बुदमब्जं खर्वं निखर्वमहापद्मशङ्कवस्तस्मात् ॥ ५५ ॥ जलधिश्चान्त्यं मध्यं परार्ध्यमिति दशगुणोत्तरं संज्ञाः ॥ इति ॥ अत्रोदाहरणं–पञ्चत्र्येकमितो राशि–र्दिवाकरगुणीकृतः । स्याद्विंशा षोडशशती,क्रमोऽङ्कानां च वामतः ॥५६॥ अथ प्रसङ्गादुपयोगित्वाच्च भागहारविधिरुच्यते–यद्गुणो भाजकः शुद्ध्ये–दन्त्यादेर्भाज्यराशितः । तत्फलं भागहारे स्यात्, भागाप्राप्तौ च खं फलम् ॥ ५७ ॥ अग्रे यथाऽऽप्यते भागः, पूर्वमङ्कं तथा भजेत् । षड्भिर्भागे यथा षष्टेः, प्राप्यन्ते केवलं दश ॥५८॥–अथ प्रकृतम्–पादः स्यादङ्गुलैः षड्भिर्वितस्तिः पादयोर्द्वयम् । वितस्तिद्वितयं हस्तो, द्वौ हस्तौ कुक्षिरुच्यते ॥ ५९ ॥ कुक्षिद्वयेन दण्डः स्या–त्तावन्मानं धनुर्भवेत् । युगं वा मुसलं वापि, नालिका वा समाः समे ॥६०॥ अङ्गुलैः षण्णवत्यैव, सर्वेऽपि प्रमिता अमी । सहस्रद्वितयेनाथ, क्रोशः स्याद्धनुषामिह ॥ ६१ ॥ चतुष्टयेन क्रोशानां, योजनं तत्पुनस्त्रिधा । उत्सेधात्मप्रमाणाख्यै–रङ्गुलैर्जायते पृथक् ॥ ६२ ॥ एवं पादादिमानानां, सर्वेषां त्रिप्रकारताम् । विभाव्य विनियुञ्जीत, स्वस्वस्थाने यथायथम् ॥ ६३ ॥ प्रमाणाङ्गुलनिष्पन्न–योजनानां प्रमाणतः । असंख्यकोटाकोटीभि–रेका रज्जुः प्रकीर्तिता ॥ ६४ ॥ स्वयम्भूरमणाब्धेर्यं, पूर्वपश्चिमवेदिके ।

२०

२५



२८

तयोः परान्तान्तरालं, रज्जुमानमिदं भवेत् ॥ ६५ ॥ लोकैश्च–यवोदरैरङ्गुलमष्टसंख्यै–र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः । हस्तैश्चतुर्भिर्भवतीह दण्डः, क्रोशः सहस्रद्वितयेन तेषाम् ॥ ६६ ॥ स्याद्योजनं क्रोशचतुष्टयेन, तथा कराणां दशकेन वंशः । निवर्तनं विंशतिवंशसंख्यैः, क्षेत्रं चतुर्भिश्च भुजैर्निबद्धम् ॥ ६७ ॥ इत्याद्यभिधीयते ॥

मानं पल्योपमस्याथ, तत्सागरोपमस्य च । वक्ष्ये विस्तरतः किञ्चित्, श्रुत्वा श्रीगुरुसन्निधौ ॥६८॥ आद्यमुद्धारपल्यं स्या–दद्धापल्यं द्वितीयकम् । तृतीयं क्षेत्रपल्यं स्या–दिति पल्योपमं त्रिधा ॥ ६९ ॥ एकैकं द्विप्रकारं स्यात्, सूक्ष्मबादरभेदतः । त्रैधस्यैवं सागरस्या–प्येवं ज्ञेया द्विभेदता ॥७०॥ उत्सेधाङ्गुलसिद्धैक–योजनप्रमितोऽवटः । उण्डत्वायामविष्कम्भै–रेष पल्य इति स्मृतः ॥७१॥ परिधिस्तस्य वृत्तस्य, योजनत्रितयं भवेत् । एकस्य योजनस्योन–षष्ठभागेन संयुतम् ॥७२॥ संपूर्य उत्तरकुरु–नृणां शिरसि मुण्डिते । दिनैरेकादिसप्तान्तै, रूढकेशाग्रराशिभिः ॥७३॥ क्षेत्रसमासबृहद्वृत्तिजम्बूद्वीपप्रज्ञप्तिवृत्त्यभिप्रायोऽयं, प्रवचनसारोद्धारवृत्तिसंग्रहणीबृहद्वृत्त्योस्तु मुण्डिते शिरसि एकेनाह्ना द्वाभ्यामहोभ्यां यावदुत्कर्षतः सप्तभिरहोभिः प्ररूढानि वालाग्राणीत्यादि सामान्यतः कथनादुत्तरकुरुनरवालाग्राणि नोक्तानीति ज्ञेयं । 'वीरंजयसेहर'क्षेत्रविचारसत्कस्वोपज्ञवृत्तौ तु देवकुरूत्तरकुरूद्भवसप्तदिनजातोरणस्योत्सेधाङ्गुलप्रमाणं रोम सप्तकृत्वोऽष्टखण्डीकरणेन विंशतिलक्षसप्तनवतिसहस्रैकशतद्वापञ्चाशत्प्रमितखण्डभावं प्राप्यते, तादृशै रोमखण्डैरेष पल्यो भ्रियत इत्यादिरर्थतः संप्रदायो दृश्यत इति ज्ञेयं ॥ एतानि चाङ्गुलसत्कानि रोमखण्डानि चतुर्विंशतिगुणानि हस्ते, तानि चतुर्गुणानि धनुषि,

तानि द्विसहस्रगुणानि क्रोशे, एवं क्रमेण समवृत्तघनयोजनपल्यगतो रोमखण्डराशिर्भवति, स चाङ्कतो यथा—

त्रयस्त्रिंशत्कोटयः स्युः, सप्त लक्षाणि चोपरि । द्वाषष्टिश्च सहस्राणि, शतं च चतुरुत्तरम् ॥ ७४ ॥ एतावत्यः कोटिकोटि–कोटाकोट्यः स्मृता अथ । चतुर्विंशतिर्लक्षाणि, पञ्चषष्टिः सहस्रकाः ॥ ७५ ॥ पंचविंशाः शताः षट् च, स्युः कोटाकोटिकोटयः । कोटाकोटीनां च लक्षा, द्विचत्वारिंशदित्यथ ॥ ७६ ॥ एकोनविंशतिरपि, सहस्राणि शता नव । षष्टिश्चोपरिकोटीनां, मानमेवं निरूपितम् ॥ ७७ ॥ लक्षाणि सप्तनवतिस्त्रिपञ्चाशत्सहस्रकाः । षट् शतानि च पल्येऽस्मिन्, स्युः सर्वे रोमखण्डकाः ॥ ७८ ॥ त्रित्रिखाश्वरसाक्ष्याशावाद्र्येक्ष्यग्धिरसेन्द्रियाः । पड्द्विपञ्चचतुर्द्व्येका–काङ्कषट्खाङ्कवाजिनः ॥ ७९ ॥ पञ्च त्रीणि च षट् किंच, नव खानि ततः परम् । आदितः पल्यरोमांश–राशिसंख्याङ्कसंग्रहः ॥ ८० ॥ अत्रोक्तशेषो विस्तरस्तु उपाध्यायश्रीशान्तिचन्द्रगणिकृतश्रीजंबुद्वीपप्रज्ञप्तिवृत्तेरवसेयः ॥



तथा निबिडमाकण्ठं, भ्रियते स यथा हि तत् । नाग्निर्दहति वालाग्रं, सलिलं च न कोथयेत् ॥ ८१ ॥ तथा च चक्रिसैन्येन, तमाक्रम्य प्रसर्प्पता । न मनाक् क्रियते नीचै–रेवं निबिडतां गतात् ॥ ८२ ॥ समये समये तस्मा–द्वालखंडे समुद्धृते । कालेन यावता पल्यः, स भवेन्निष्ठितोऽखिलः ॥ ८३ ॥ कालस्य तावतः संज्ञा, पल्योपममिति स्मृता । तत्राप्युद्धारमुख्यत्वा–दिदमुद्धारसंज्ञितम् ॥ ८४ ॥ ( त्रिभिर्विशेषकम् ) इदं बादरमुद्धार–पल्योपममुदीरितम् । प्रमाणमस्य संख्याताः, समयाः कथिता जिनैः ॥ ८५ ॥ अस्मिन्निरूपिते सूक्ष्मं,

सुबोधमबुधैरपि । अतो निरूपितं नान्य-त्किञ्चिदस्य प्रजोजनम् ॥ ८६ ॥ एतेषामथ पल्यानां, दशभिः कोटिकोटिभिः । स्वेद्वादरमुद्धार-संज्ञकं सागरोपमम् ॥ ८७ ॥ अथैकैकस्य पूर्वोक्त-वालाग्रस्य मनीषया । असंख्येयानि खण्डानि, कल्पनीयानि धीधनैः ॥ ८८ ॥ यत्सूक्ष्मं पुद्गलद्रव्यं, छद्मस्थश्चक्षुषेक्षते । तदसंख्यांशमानानि, तानि स्युर्द्रव्यमानतः ॥ ८९ ॥ सूक्ष्मपनकजीवाङ्गा-वगाढक्षेत्रतोऽधिके । असंख्येयगुणे क्षेत्रेऽवगाहन्त इमानि च ॥ ९० ॥ व्याचक्षतेऽथ वृद्धास्तु, मानमेषां बहुश्रुताः । पर्याप्तबादरक्षोणी-कायिकाङ्गेन संमितम् ॥ ९१ ॥ समानान्येव सर्वाणि, तानि च स्युः परस्परम् । अनन्तप्रदेशिकानि, प्रत्येकमखिलान्यपि ॥ ९२ ॥ ततस्तैः पूर्यते प्राग्वत्, पल्यः पूर्वोक्तमानकः । समये समये चैकं, खण्डमुद्ध्रियते ततः ॥ ९३ ॥ निःशेषं निष्ठिते चास्मिन्, सूक्ष्ममुद्धारपल्यकम् । संख्येयवर्षकोटीभिर्मितमेतदुदाहृतम् ॥ ९४ ॥ सुसूक्ष्मोद्धारपल्यानां, दशभिः कोटिकोटिभिः । सूक्ष्मं भवति चोद्धारा-भिधानं सागरोपमम् ॥ ९५ ॥ आभ्यां सागरपल्याभ्यां, मीयन्ते द्वीपसागराः । अस्याः सार्द्धद्विसागर्याः, समयैः प्रमिता हि ते ॥ ९६ ॥ यद्वैतासु पल्यकोटा-कोटीषु पञ्चविंशतौ । यावन्ति वालखण्डानि । तावन्तो द्वीपसागराः ॥ ९७ ॥ एकादिसप्तान्तदिनो-द्गतैः केशाग्रराशिभिः । भृताडुक्तप्रकारेण, पल्यात्पूर्वोक्तमानतः ॥ ९८ ॥ प्रतिवर्षशतं खण्ड-मेकमेकं समुद्धरेत् । निःशेषं निष्ठिते चास्मि-न्नद्धापल्यं हि बादरम् ॥ ९९ ॥ एतेषामथ पल्यानां, दशभिः कोटिकोटिभिः । भवेद्वादरमद्धाख्यं, जिनोक्तं सागरोपमम् ॥ १०० ॥ पूर्वरीत्याऽथ वालाग्रैः, खण्डीभूतैरसंख्यशः । पूर्णात्पल्यात्तथा खण्डं,

पल्योपमसागरोपमस्वरूपं

५

१०

१४

प्रतिवर्षशतं हरेत् ॥ १ ॥ कालेन यावता पल्यः, स्यान्निर्लेपोऽखिलोऽपि सः । तावान् कालो भवेत्सूक्ष्म-मद्धा-पल्योपमं किल ॥ २ ॥ एतेषामथ पल्यानां, दशभिः कोटिकोटिभिः । सूक्ष्ममद्धाभिधं ज्ञान-सागराः सागरं जगुः ॥ ३ ॥ सूक्ष्माद्धापल्यवार्द्धिभ्या-माभ्यां मीयन्त आर्हतैः । आयूंषि नारकादीनां, कर्मकायस्थिती तथा ॥ ४ ॥ एतेषामेव वार्धीनां, दशभिः कोटिकोटिभिः । उत्सर्पिणी भवेदेका, तावत्येवावसर्पिणी ॥ ५ ॥ एकादि-ससान्तघस्र-रूढकेशाग्रराशिभिः । भृतादुक्तप्रकारेण, पल्यात्पूर्वोक्तमानतः ॥ ६ ॥ तत्तद्वालाग्रसंपृष्ट-खप्रदे-शापकर्षणे । समये समये तस्मिन्, प्राप्ते निःशेषतां तथा ॥ ७ ॥ कालचक्रैरसंख्यातै-र्मितं तत्क्षेत्रनामकम् । बादरं जायते पल्यो-पममेवं जिनैर्मतम् ॥ ८ ॥ कोटिकोट्यो दशैषां च, बादरं क्षेत्रसागरम् । सुबोधतायै सूक्ष्मस्य, कृतमेतन्निरूपणम् ॥९॥ छिन्नैरसंख्यशः प्राग्वत्, केशाग्रैः पल्यतो भृतात् । समये समये चैकः, खप्रदे-शोऽपकर्ष्यते ॥ १० ॥ एवं केशांशसंस्पृष्टा-संस्पृष्टाभ्रांशकर्षणात् । तस्मिन्निःशेषिते सूक्ष्मं, क्षेत्रपल्योपमं भवेत् ॥११॥ यद्यप्यत्र वालाग्रखण्डस्पृष्टास्पृष्टनभःप्रदेशकर्षणेऽधिकृते एकैकस्य वालाग्रस्यासंख्यभागकरणं नोपयुक्तं, उभयथाऽप्यविशेषात्, तथाऽपि प्रवचनसारोद्धारवृत्त्यादिषु पूर्वग्रन्थेषु तथा दर्शनादत्रापि तथोक्तमिति ज्ञेयं[1] ॥

१ आह—यदि स्पृष्टा अस्पृष्टाश्च नभःप्रदेशा गृह्यन्ते, तर्हि वालाग्रैः किं प्रयोजनम् ?, यथोक्तपल्यान्तर्गतनभःप्रदेशापहारमात्रतः सामान्येनैव वक्तुमुचितं स्यात्, सत्यं, किन्तु प्रस्तुतपल्योपमेन दृष्टिवादे द्रव्याणि मीयन्ते, तानि कानिचिद्यथोक्तवालाग्रस्पृष्टैरेव नभःप्रदेशैर्मीयन्ते, कानिचिदस्पृष्टैरित्यतो दृष्टिवादोक्तद्रव्यमानोपयोगित्वाद् वालाग्रप्ररूपणाऽत्र प्रयोजनवतीति ( अनुयोगद्वारवृत्तौ )



२०

२५

नन्वेवं निचिते पल्ये, वालाग्रैः संभवन्ति किम् ? । नभःप्रदेशा अस्पृष्टा-स्तदुद्धारो यदीरितः ॥ १२ ॥ उच्यते संभवन्त्येवास्पृष्टास्ते सूक्ष्मभावतः । नभोऽंशकानां वालाग्र-खण्डौघात्तादृशादपि ॥ १३ ॥ यथा कुष्माण्डभरिते, मातुलिङ्गानि मञ्चके । मान्ति तैश्च भृते धात्री-फलानि बदराण्यपि ॥ १४ ॥ तत्रापि मान्ति चणका-द्यः सूक्ष्मा यथाक्रमम् । एवं वालाग्रपूर्णेऽपि, तत्रास्पृष्टा नभोऽंशकाः ॥ १५ ॥ यद्वा-यतो घनेऽपि स्तम्भादौ, शतशो मान्ति कीलकाः । ज्ञायतेऽस्पृष्टखांशानां, ततस्तत्रापि संभवः ॥ १६ ॥ एवं वालाग्र खण्डौघै-रत्यन्तनिचितेऽपि हि । युक्तैव पल्ये खांशाना-मस्पृष्टानां निरूपणा ॥ १७ ॥ एतेषामथ पल्यानां, दशभिः कोटिकोटिभिः । सूक्ष्मं सूक्ष्मेक्षिभिः क्षेत्र-सागरोपममीक्षितम् ॥ १८ ॥ बादरक्षेत्रपल्याम्भो-निधिभ्यां सूक्ष्मके इमे । असंख्यगुणमाने स्तः, कालतः पल्यसागरे ॥ १९ ॥ क्षेत्रसागरपल्याभ्या-माभ्यां प्रायः प्रयोजनम् । द्रव्यप्रमाणचिन्तायां, दृष्टिवादे क्वचिद्भवेत् ॥ २० ॥ पल्यं पल्योपमं चापि, ऋषिभिः परिभाषितम् । सारं वारिधिपर्यायं, सागरं सागरोपमम् ॥ २१ ॥

अथ संख्यातादिकानां,स्वरूपं किञ्चिदुच्यते। श्रोतव्यं तत्सावधानै-र्जैनैस्तत्त्वबुभुत्सुभिः ॥२२॥ त्रिधा संख्यातं जघन्य-मध्यमोत्कृष्टभेदतः । असंख्यातानन्तयोस्तु, भेदा नव नवोदिताः ॥२३॥ परीतासंख्यातमाद्यं, युक्तासंख्यातकं परम् । तार्त्तीयीकमसंख्याता—संख्यातं परिकीर्त्तितम् ॥२४॥ परीतानन्तमाद्यं स्या-द्युक्तानन्तं द्वितीयकम् । अनन्तानन्तकं तार्त्ती-यीकं च गदितं जिनैः ॥२५॥ षडप्येते स्युर्जघन्यमध्यमोत्कृष्टभेदतः । अष्टादशाथ

॥ ६ ॥

संख्याते-स्त्रिभिः सहैकविंशतिः ॥२६॥ द्वावेव लघु संख्यातं, त्र्यादिकं मध्यमं ततः । अर्वागुत्कृष्टसंख्यातात्, नै-
कस्तु गणनां भजेत् ॥२७॥ यत्तु संख्यातमुत्कृष्टं, तत्तु ज्ञेयं विवेकिभिः । चतुष्पल्याद्युपायेन, सर्षपोत्करमानतः
॥ २८ ॥ जम्बूद्वीपसमायाम-विष्कम्भपरिवेषकाः । सहस्रयोजनोद्वेधाः, पल्याश्चत्वार ईरिताः ॥ २९ ॥ उच्चया
योजनान्यष्टौ, जगत्या ते विराजिताः । जगत्युपरि च क्रोश-द्वयोच्चवेदिकाश्रिताः ॥३०॥ दिदृक्षवो द्वीपवार्धीन्,
स्वीकृतोद्ग्रीविका इव । ध्यायन्तो ज्येष्ठसंख्यातं, योगपट्टभृतोऽथवा ॥ ३१ ॥ त्रिभिर्विशेषकम् ॥ आद्योऽनव-
स्थिताख्यः स्या-च्छलाकाख्यो द्वितीयकः । तृतीयः प्रतिशलाक-स्तुर्यो महाशलाककः ॥ ३२ ॥ आवेदि-
कान्तं सशिख-स्तत्र पल्योऽनवस्थितः । मायादेकोऽपि न यथा, सर्षपैर्भ्रियते तथा ॥ ३३ ॥ असत्कल्पनया
कश्चि-द्देवस्तमनवस्थितम् । कृत्वा वामकरे तस्मा-त्सर्षपं परपाणिना ॥ ३४ ॥ जम्बूद्वीपे क्षिपेदेकं, द्वितीयं
लवणोदधौ । तृतीयं धातकीखण्डे, तुर्यं कालोदवारिधौ ॥ ३५ ॥ एवं द्वीपे समुद्रे वा, स पल्यो यत्र निष्ठितः ।
तत्समायामविष्कम्भ-परिधिः कल्प्यते पुनः ॥ ३६ ॥ उद्वेधोत्सेधतः प्राग्व-द्भ्रियते सर्षपैश्च सः । क्रमाद्
द्वीपे समुद्रे च, पूर्ववन्न्यस्यते कणः ॥ ३७ ॥ एवं द्वितीयवारं च, रिक्तीभूतेऽनवस्थिते । मुच्यते सर्षपः साक्षी,
शलाकाभिधपल्यके ॥ ३८ ॥ पूर्यमाणै रिच्यमानै-रेवं भूयोऽनवस्थितैः । शलाकाख्योऽपि सशिखं, पूर्यते
साक्षिसर्षपैः ॥ १३९ ॥ अत्रेदं ज्ञेयं-आद्येऽनवस्थिते रिक्ती-भूते साक्षी न मुच्यते । सर्वैः पल्यैः समानत्वा-
न्नानवस्थितताऽस्य यत् ॥ ४० ॥ याऽस्यानवस्थितेत्याह्वा, ज्ञेया योग्यतया तु सा । घृतयोग्यो घटो यद्वद्, घृत-



२०

२५

॥ ६ ॥

२८

कुंभोऽभिधीयते ॥ ४१ ॥ साक्षी च सर्षपकणो, मुच्यते यः शलाकके । अनवस्थितसत्कं तं, जगुरेके परे
परम् ॥ ४२ ॥ पूर्णीभूते शलाकेऽथ, स्थाप्यस्तत्रानवस्थितः । क्रमागतद्वीपवार्द्धि–समानः सर्षपैर्भृतः ॥ ४३ ॥
अथोत्पाट्य शलाकाख्यं, प्राग्वत्तस्य कणान् क्षिपेत् । अनवस्थान्तिमकणा–क्रान्तद्वीपाम्बुधेः पुरः ॥ ४४ ॥
रिक्तीभूते शलाकेऽथ, पल्ये प्रतिशलाकके । क्षिप्यते सर्षपस्तस्य, साक्षीभूतस्तृतीयके ॥ ४५ ॥ अथ तत्र
स्थितं पूर्णं, तं गृहीत्वाऽनवस्थितम् । शलाकान्त्यकणाक्रान्ता–दग्रे प्राग्वत्कणान् क्षिपेत् ॥ ४६ ॥ पूर्यमाणै
रिच्यमानै–र्भूयो भूयोऽनवस्थितैः । पुनः शलाको भ्रियते, प्राग्वत्तथाऽनवस्थितः ॥ ४७ ॥ प्राग्वच्छलाकमु-
त्पाट्य, परतो द्वीपवार्धिषु । रिक्तीकृत्य च तत्साक्षी, स्थाप्यः प्रतिशलाकके ॥ ४८ ॥ एवं प्रतिशलाकेऽपि,
सशिखं संभृते सति । अनवस्थशलाकाख्यौ, स्वयमेव भृतौ स्थितौ ॥ ४९ ॥ शलाकसाक्षिणः स्थानाऽभा वा-
त्स रिच्यते कथम्? । आद्यस्यापि तदभावात्, कथं सोऽपि हि रिच्यते? ॥ ५० ॥ ततः प्रतिशलाकाख्य—
मुत्पाट्य तस्य सर्षपान् । क्षिपेत्पूर्वोक्तया रीत्या, परतो द्वीपवार्धिषु ॥ ५१ ॥ एवं प्रतिशलाकेऽपि, निखिलं
निष्ठिते सति । साक्षीभूतं कणमेकं, क्षिपेन्महाशलाकके ॥ ५२ ॥ ततः शलाकमुत्पाट्य, द्वीपाब्धिषु तदग्रतः ।
सर्षपाश्यस्य तत्साक्षी, स्थाप्यः प्रतिशलाकके ॥ ५३ ॥ ततः क्रमाद्वर्द्धमान–विस्तारमनवस्थितम् । उत्पाट्य
परतो द्वीप–पाथोधिषु कणान् क्षिपेत् ॥ ५४ ॥ प्राग्वदेतत्साक्षिकणैः, शलाकाख्यः प्रपूर्यते । तमप्यनेकशः
प्राग्वत्, संरिच्यैतस्य साक्षिभिः ॥ ५५ ॥ तृतीयः परिपूर्यताऽसकृदेतस्य साक्षिभिः । पल्यो महाशलाकोऽ-

पि, सशिखं पूर्यते ततः ॥ ५६ ॥ यथोत्तरमथो साक्षि-स्थानाभावादिमे समे। भृताः स्थिता दिक्कनीनां, क्रीडा-
समुद्गका इव ॥ ५७ ॥ यत्रान्तिमायां वेलायां, रिक्तीभूतोऽनवस्थितः । तावन्मानस्तदाऽस्त्येष, त्रयस्त्वन्ये
यथोदिताः ॥ ५८ ॥ अथैतांश्चतुरः पल्यान्, सावकाशे स्थले क्वचित् । उद्वम्य तत्सर्षपाणां, निचयं रचये-
द्धिया ॥ ५९ ॥ ततश्च जम्बूद्वीपादि-द्वीपवार्धिषु सर्षपान् । उच्चित्य पूर्वनिक्षिप्तां-स्तत्रैव निचये क्षिपेत् ॥६०॥
एकसर्षपरूपेण, न्यूनोऽयं निचयोऽखिलः । भवेदुत्कृष्टसंख्यात-मानमित्युदितं जिनैः ॥ ६१ ॥ एतदुत्कृष्टसं-
ख्यात-मेकरूपेण संयुतम् । भवेत्परीतासंख्यातं, जघन्यमिति तद्विदः ॥ ६२ ॥ ज्येष्ठात्परीतासंख्यातादर्वाग्
जघन्यतः परम् । मध्यं परीताऽसंख्यातं, भवेदिति जिनैः स्मृतम् ॥ ६३ ॥ जघन्ययुक्तासंख्यात-मेकरूप-
विवर्जितम् । भवेत्परीतासंख्यात-मुत्कृष्टमिति तद्विदः ॥ ६४ ॥ जघन्ययुक्तासंख्यप्रकारश्चायम्-यावत्प्र-
माणो यो राशिर्भवेत्स्वरूपसंख्यया । स न्यस्य तावतो वारान्, गुणितोऽभ्यास उच्यते ॥ ६५ ॥ यथा पञ्चा-
त्मको राशिः, पञ्च वारान् प्रतिष्ठितः । मिथः संगुणितो जातः, प्रथमं पञ्चविंशतिः ॥ ६६ ॥ शतं सपादं
संजातो, गुणितः सोऽपि पञ्चभिः । पुनः संगुणितः पञ्च-विंशानि स्युः शतानि षट् ॥ ६७ ॥ जातश्चतुर्थ-
वेलाया-मेकत्रिंशच्छतानि सः । पञ्चविंशत्युपचिता-न्यभ्यासगुणितं त्विदः ॥ ६८ ॥ ततश्च-प्रागुक्ते सार्षपे
पुञ्जे, यावन्तः किल सर्षपाः । तत्संख्यान् मुख्यनिचय-तुल्यान् राशीन् पृथक् पृथक् ॥ ६९ ॥ कृत्वा मिथ-
स्तद्गुणने, यो राशिर्जायतेऽन्तिमः । जघन्ययुक्तासंख्यं तदावलीसमयैः समम् ॥ ७० ॥ इयमत्र भावना-

परीतासं-
ख्यातादि
१५

२०

२५
॥ ७ ॥

२८

युक्तासं-ख्यातादि

स सर्षपाणां निकरः, कल्प्यते चेद्दशात्मकः । प्राग्वदभ्यासगुणितः, सहस्रकोटिको भवेत् ॥ ७१ ॥ गरिष्ठ-युक्तासंख्यातादर्वाग् जघन्यतः परम् । मध्यमं जायते युक्तासंख्यातमिति तद्विदः ॥ ७२ ॥ जघन्ययुक्तासंख्यातं, प्राग्वदभ्यासताडितम् । हीनमेकेन रूपेण, युक्तासंख्यातकं गुरु ॥ ७३ ॥ एतदेव रूपयुक्तमसंख्यासंख्यकं लघु । मध्यासंख्यातासंख्यात-मस्मादुत्कृष्टकावधि ॥ ७४ ॥ जघन्यासंख्यासंख्यातं, भवेदभ्यासताडितम् । एकरूपोनितं ज्येष्ठासंख्यासंख्यातकं स्फुटम् ॥ ७५ ॥ अत्रैकरूपक्षेपे च, परीतानन्तकं लघु । मध्यं चास्मात्समुत्कृष्टपरीतानन्तकावधि ॥ ७६ ॥ ह्रस्वं परीत्ताऽनन्तं च, प्राग्वदभ्याससंगुणम् । परीत्तानन्तकं ज्येष्ठमेकरूपोनितं भवेत् ॥ ७७ ॥ सैकरूपं तज्जघन्ययुक्तानन्तकमीरितम् । परमस्मात्पराचार्वाग्, युक्तानन्तं हि मध्यमम् ॥ ७८ ॥ युक्तानन्तं तज्जघन्यमभ्यासपरिताडितम् । निरेकरूपमुत्कृष्टयुक्तानन्तकमाहितम् ॥ ७९ ॥ अत्रैकरूपक्षेपे स्यादनन्तानन्तकं लघु । अस्माद्यदधिकं मध्यानन्तानन्तं च तत्समम् ॥ ८० ॥ उत्कृष्टानन्तानन्तं तु, नास्ति सिद्धान्तिनां मते । अनुयोगद्वारसूत्रे, यदुक्तं गणधारिभिः ॥ ८१ ॥ एवंमुक्कोसयं अणंताणंतयं नत्थित्ति। अभिप्रायः समग्रोऽयं, प्रोक्तः सूत्रानुसारतः । अथ कार्मग्रन्थिकानां, मतमत्र प्रपञ्च्यते ॥ ८२ ॥ समद्विघातो वर्गः स्यादिति वर्गस्य लक्षणम् । पञ्चानां वर्गकरणे, यथा स्युः पञ्चविंशतिः ॥ ८३ ॥ जघन्ययुक्तासङ्ख्यातावधि तुल्यं मतद्वये । अतः परं विशेषोऽस्ति, स चायं परिभाव्यते ॥ ८४ ॥

५

१०

१४

१ से किं तं अणंताणंतए ?, अणन्ताणंतए दुविहे पण्णत्ते, तंजहा—जहण्णए अजहण्णमणुक्कोसए ( इति अनुयोगद्वारे ५६० )

जघन्ययुक्तासङ्ख्यातादारभ्योत्कृष्टकावधि । मध्यमं युक्तासङ्ख्यातं, स्यादुत्कृष्टमथोच्यते ॥ ८५ ॥ जघन्ययुक्तासङ्ख्यातं, वर्गितं रूपवर्जितम् । उत्कृष्टयुक्तासङ्ख्यातं, प्राग्रूपैः प्ररूपितम् ॥ ८६ ॥ एकरूपेण युक्तं तदसंख्यासंख्यकं लघु । अर्वागुत्कृष्टतो मध्यमथोत्कृष्टं निरूप्यते ॥ ८७ ॥ जघन्यासंख्यासंख्यातं, यत्ततो वर्गितं त्रिशः । अमीभिर्दशभिः क्षेपैर्वक्ष्यमाणैर्विमिश्रितम् ॥ ८८ ॥ तच्चैवं–त्रिंशत्कोटिकोटिसारा, ज्ञानावरणकर्मणः । स्थितिरुत्कर्षतो ज्ञेया, जघन्याऽऽन्तर्मुहूर्त्तिकी ॥ ८९ ॥ अनयोरन्तराले च, मध्यमाः स्युरसंख्यशः । आसां बन्धहेतुभूताऽध्यवसाया असङ्ख्यशः ॥ ९० ॥ एवमेवाध्यवसाया, अपरेष्वपि कर्मसु । स्युरसङ्ख्येयलोकाभ्रप्रदेशप्रमिता इमे ॥ ९१ ॥ जघन्यादिभेदवन्तोऽनुभागाः कर्मणां रसाः । तेऽप्यसङ्ख्येयलोकाभ्र–प्रदेशप्रमिताः किल ॥ ९२ ॥ ततश्च–लोकाभ्र १ धर्मा २ धर्म ३ कजीवानां ४ ये प्रदेशकाः । अध्यवसायस्थानानि, स्थितिबन्धानुभागयोः ५–६ ॥९३॥ मनोवचःकाययोगविभागा निर्विभागकाः ७ । कालचक्रस्य समया ८ स्तथा प्रत्येकजन्तवः ९ ॥ ९४ ॥ अनन्ताङ्गिदेहरूपा, निगोदाश्च १० दशाप्यमून् । त्रिवर्गिते लघ्वसङ्ख्यासङ्ख्येऽसङ्ख्यान्नियोजयेत् ॥ ९५ ॥ त्रिशः पुनर्वर्गयेच्च, भवेदेवं कृते सति । असङ्ख्यासङ्ख्यमुत्कृष्टमेकरूपविनाकृतम् ॥ ९६ ॥ तत्रैकरूपप्रक्षेपे, परीतानन्तकं लघु । परीतानन्तकाज्ज्येष्ठाद्यदर्वाक् तच्च मध्यमम् ॥ ९७ ॥ अभ्यासगुणिते प्राग्वत्परीतानन्तके लघौ । परीतानन्तमुत्कृष्टमेकरूपोज्झितं भवेत् ॥ ९८ ॥ सैकरूपे पुनस्तस्मिन्, युक्तानन्तं जघन्यकम् । अभव्यजीवैस्तुलितं, मध्यं तूत्कृष्टकावधि ॥ ९९ ॥ जघन्ययुक्तानन्ते च, वर्गिते रूपवर्जिते । स्याद्यु-

उत्कृष्टनन्तानन्ताधि.

२०

२५

॥ ८ ॥

२८

क्तानन्तमुत्कृष्टमित्युक्तं पूर्वसूरिभिः ॥ २०० ॥ अत्रैकरूपप्रक्षेपादनन्तानन्तकं लघु । प्राग्वदेतदपि ज्ञेयं, मध्यमुत्कृष्टकावधि ॥ १ ॥ जघन्यानन्तानन्तं तत्, वर्गयित्वा त्रिशस्ततः । क्षेपानमूननन्तान् षट्, वक्ष्यमाणान्नियोजयेत् ॥२॥ ते चामी–वनस्पती १ न्निगोदानां, जीवान् २ सिद्धांश्च ३ पुद्गलान् ४ । सर्वकालस्य समयान्, ५ सर्वालोकनभोऽंशकान् ६ ॥ ३ ॥ पुनस्त्रिवर्गिते जातराशौ तस्मिन् विनिक्षिपेत् । पर्यायान् केवलज्ञानदर्शनानामनन्तकान् ॥ ४ ॥ अनन्तानन्तमुत्कृष्टं, भवेदेवं कृते सति । मेयाभावादस्य मध्ये, नैव व्यवहृतिः पुनः ॥ ५ ॥ एवं च नवधाऽनन्तं, कर्मग्रन्थमते भवेत् । भवत्यष्टविधं किंच, सिद्धान्ताश्रयिणां मते ॥ २०६ ॥ सर्वेषां रूपमेकैकमेषां ज्येष्ठकनीयसाम् । मध्यमानां तु रूपाणि, भवन्ति बहुधा किल ॥ २०७ ॥ सङ्ख्यातभेदं सङ्ख्यातमसङ्ख्यातविधं पुनः । असङ्ख्यातमनन्तं चानन्तभेदं प्रकीर्त्तितम् ॥ २०८ ॥ प्रयोजनं त्वेतेषां–अभविअ चउत्थणंते, पंचमि सम्माइ परिवडिअ सिद्धा । सेसा अट्ठमणंते, पजथूलवणाइ बावीसं ॥ २०९ ॥ ते चामी–बायरपज्जत्तवणा १, बायरपज्ज २ अपज्जबायरवणा ३ य । बायरअपज्ज ४ बायर ५, सुहुमापज्जवण ६ सुहुमअप्पज्जा ७ ॥ १० ॥ सुहुमवणा पज्जत्ता ८, पज्जसुहुमा ९ सुहुम १० भव्व ११ निगोया १२ ॥ वण १३ एगिंदिय १४ तिरिया १५, मिच्छद्दिट्ठी १६ अविरया १७ य ॥ ११ ॥ सकसाइणो १८ य छउमा १९ सजोगि २० संसारि २१ सवजीवा २२ य । जहसंभवमब्भहिया, बावीसं अट्ठमेऽणंते ॥ १२ ॥ इत्यादि यथास्थानं

१ दृष्टिवादभृदाचार्यप्रणीतकर्मप्रकृत्यादिशास्त्राणामप्रामाण्यमापादयितुमशक्यत्वात् । अग्रतःसंख्याऽभावात् पूर्वानन्तप्रक्षेपेऽनवस्थानात् ।

असंख्यातादिप्रयोजनं

५

१०

ज्ञेयं ॥ इत्यङ्गुलादि प्रकृतोपयोगिमानं मयाऽऽसोक्तिमपेक्ष्य दृब्धम् । अथो यथास्थानमिदं नियोज्यं, कोशस्थितं द्रव्यमिवागमज्ञैः ॥ १३ ॥ विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गो निर्गलितार्थसार्थसुभगः पूर्णः सुखेनादिमः ॥ २४ ॥

॥ इति लोकप्रकाशे प्रथमः सर्गः समाप्तः ॥

---

## अथ द्वितीयः सर्गः प्रारभ्यते

स्तुमः शङ्खेश्वरं पार्श्वं, मध्यलोके प्रतिष्ठितम् । देहलीदीपकन्यायाद्, भुवनत्रयदीपकम् ॥ १ ॥ प्रस्तूयतेऽथ प्रकृतं, स्वरूपं लोकगोचरम् । द्रव्यतः क्षेत्रतः कालभावतस्तच्चतुर्विधम् ॥ २ ॥ एकः पञ्चास्तिकायात्मा, द्रव्यतो लोक इष्यते । योजनानामसङ्ख्येयाः, कोटयः क्षेत्रतोऽमितः ॥ ३ ॥ कालतोऽभूच्च भाव्यस्ति, भावतोऽनन्तपर्यवः । लोकशब्दप्ररूप्यास्तिकायस्थगुणपर्यवैः ॥ ४ ॥ अथवा—जीवाजीवस्वरूपाणि, नित्यानित्यत्ववन्ति च । द्रव्याणि षट् प्रतीतानि, द्रव्यलोकः स उच्यते ॥ ५ ॥ तथोक्तं स्थानाङ्गवृत्तौ—जीवमजीवे रूवमरूवि सपएसमप्पएसे अ । जाणाहि दव्वलोगं, निच्चमनिच्चं च जं दव्वं ॥ ६ ॥ ये संस्थानविशेषेण, तिर्यगूर्ध्वमधःस्थिताः । आकाशस्य प्रदेशास्तं, क्षेत्रलोकं जिना जगुः ॥ ७ ॥ समयावलिकादिश्च, काललोको जिनैः

२० ॥ ९ ॥ २५

स्मृतः । भावलोकस्तु विज्ञेयो, भावा औदयिकादयः ॥ ८ ॥ यदाहुः—ओदइए उवसमिए, खइए अ तहा खओ-
वसमिए अ । परिणाम सन्निवाए, छव्विहो भावलोओत्ति ॥ ९ ॥ इति स्थानाङ्गवृत्तौ—तत्र प्रथमतो द्रव्य-
लोकः किंञ्चिद्वितन्यते । मया श्रीकीर्त्तिविजयप्रसादप्राप्तबुद्धिना ॥ १० ॥ धर्मास्तिकाया १ धर्मास्ति-काया २-
वाकाश ३ एव च । जीव ४ पुद्गल ५ काला ६ श्च, षट् द्रव्याणि जिनागमे ॥ ११ ॥ धर्माधर्माभ्रजीवाख्याः,
पुद्गलेन समन्विताः । पञ्चामी अस्तिकायाः स्युः, प्रदेशप्रकरात्मकाः ॥ १२ ॥ अनागतस्यानुत्पत्तेरुत्पन्नस्य
च नाशतः । प्रदेशप्रचयाभावात्, काले नैवास्तिकायता ॥ १३ ॥ विना जीवेन पञ्चामी, अजीवाः कथिताः
श्रुते । पुद्गलेन विना चामी, जिनैरुक्ता अरूपिणः ॥ १४ ॥ धर्मास्तिकायं तत्राह, पञ्चधा परमेश्वरः ।
द्रव्यतः क्षेत्रतः कालभावाभ्यां गुणतस्तथा ॥ १५ ॥ द्रव्यतो द्रव्यमेकं स्यात्, क्षेत्रतो लोकसम्मितः ।
कालतः शाश्वतो यस्मादभूद्भाव्यस्ति चानिशम् ॥ १६ ॥ वर्णरूपरसैर्गन्धस्पर्शैः शून्यश्च भावतः । गत्यु-
पष्टम्भधर्मश्च, गुणतः स प्रकीर्त्तितः ॥ १७ ॥ स्वभावतः संचरतां, लोकेऽस्मिन् पुद्गलात्मनाम् । पानीयमिव
मीनानां, साहाय्यं कुरुते ह्यसौ ॥ १८ ॥ जीवानामेष चेष्टासु, गमनागमनादिषु । भाषामनोवचःकाययोगा-
दिष्वेति हेतुताम् ॥ १९ ॥ अस्यासत्त्वादलोके हि, नात्मपुद्गलयोर्गतिः । लोकालोकव्यवस्थाऽपि, नाभावेऽस्यो-
पपद्यते ॥ २० ॥ द्रव्यक्षेत्रकालभावैर्धर्मभ्रातेव युग्मजः । स्यादधर्मास्तिकायोऽपि, गुणतः किंतु भिद्यते

१ समयादिसमूहस्य । २ स्वभावः ।

धर्मादेःपं-
चभेदता

५

१०

१५

॥ २१ ॥ स्थित्युपष्टम्भकर्त्री हि, जीवपुद्गलयोरयम् । मीनानां स्थलवच्चेनालोके नासौ न तत्स्थितिः ॥ २२ ॥ अयं निषदनस्थानशयनालम्बनादिषु । प्रयाति हेतुतां चित्तस्थैर्यादिस्थिरतासु च ॥ २३ ॥ इदमर्थतो भग० श० १३ ॥ गतिस्थितिपरिणामे, सत्येवैतौ सहायकौ । जीवादीनां न चेत्तेषां, प्रसज्येते सदाऽपि ते ॥ २४ ॥ भवेद्व्यास्तिकायस्तु, लोकालोकभिदा द्विधा । लोकाकाशास्तिकायः स्यात्तत्रासङ्ख्यप्रदेशकः ॥ २५ ॥ स भात्यलोकाकाशेन, परीतोऽतिगरीयसा । गोलकं मध्यशुषिरं, महान्तमनुकुर्वता ॥ २६ ॥ तथोक्तं भगवतीशतक० ११ उ० ११ "अलोए णं भंते ! किंसंठिए पं० ?, गो० ! झुसिरगोलगसंठिए पं०" इत्यादि । असौ च धर्माधर्माभ्यां, स्वतुल्याभ्यां सदाऽन्वितः । भूपाल इव मन्त्रिभ्यां, बिभर्त्ति सकलं जगत् ॥ २७ ॥ अलोकाभ्रं तु धर्माद्यैर्भावैः पञ्चभिरुज्झितम् । अनेनैव विशेषेण, लोकाभ्रात्पृथगीरितम् ॥ २८ ॥ अनन्तस्याप्यस्य पूज्यैर्महत्तायां निदर्शनम् । असद्भावस्थापनया, पञ्चमाङ्गे प्रकीर्त्तितम् ॥ २९ ॥ तथाहि—सुदर्शनं सुरगिरिं, परितो निर्जरा दश । केऽपि कौतुकिनः सन्ति, स्थिता दिक्षु दशस्वपि ॥ ३० ॥ मानुषोत्तरपर्यन्तेऽष्टासु दिक्षु बहिर्मुखाः । बलिपिण्डान् दिक्कुमार्यः, किरन्त्यष्टौ स्वदिक्ष्वथ ॥ ३१ ॥ विकीर्णान् युगपत्ताभिस्तान् पिण्डानगतान् क्षितिम् । यया गत्या सुरस्तेषामेकः कोऽप्याहरेद्द्रयात् ॥ ३२ ॥ तया गत्याऽथ ते देवा, अलोकान्तदिदृक्षया । गन्तुं प्रवृत्ता युगपद्यदा दिक्षु दशस्वपि ॥ ३३ ॥ तदा च वर्षलक्षायुः, पुत्रोऽभूत्कोऽपि कस्यचित् । तस्यापि तादृशः पुत्रः, पुनस्तस्यापि तादृशः ॥ ३४ ॥ कालेन तादृशाः सप्त, पुरुषाः प्रलयं गताः ।

अलोकाकाशमहत्ता

२०

२५

॥ १० ॥

२८

ततस्तदस्थिमज्जादि, तन्नामापि गतं क्रमात् ॥ ३५ ॥ अस्मिंश्च समये कश्चित्सर्वज्ञं यदि पृच्छति । स्वामिंस्तेषां किमगतं, क्षेत्रं किं वा गतं बहु ? ॥ ३६ ॥ तदा वदति सर्वज्ञो, गतमल्पं परं बहु । अगतस्यानन्ततमो, भागो गतमिहोह्यताम् ॥ ३७ ॥ स्थित्वा सुरोऽपि लोकान्ते, नालोके स्वकरादिकम् । ईष्टे लम्बयितुं गत्यभावात्पुद्गलजीवयोः ॥ ३८ ॥ तदुक्तम्—"देवे णं भंते ! महिड्ढिए जाव महेसक्खे लोगंसि[1] हत्थं वा पायं वा जाव ऊरुं वा आउंटावित्तए वा पसारित्तए वा ?, णो इणट्ठे समट्ठे" ॥ इति भग० शतक १६ उद्दे० ८ ॥ वस्तुतस्तु नभोद्रव्यमेकमेवास्ति सर्वगम् । धर्मादिसाहचर्येण, द्विधा जातमुपाधिना ॥ ३९ ॥ लोकालोकप्रमाणत्वात्, क्षेत्रतोऽनन्तमेव तत् । असङ्ख्येयप्रमाणं च, परं लोकविवक्षया ॥ ४० ॥ कालतः शाश्वतं वर्णादिभिर्मुक्तं च भावतः । अवगाहगुणं तच्च, गुणतो गदितं जिनैः ॥ ४१ ॥ अवकाशे पदार्थानां, सर्वेषां हेतुतां दधत् । शर्कराणां दुग्धमिव, वह्नेर्लोहादिगोलवत् ॥ ४२ ॥ युग्मं ॥ यतः—परमाण्वादिना द्रव्येणैकेनापि प्रपूर्यते । खप्रदेशस्तथा द्वाभ्यामपि ताभ्यां तथा त्रिभिः ॥ ४३ ॥ अपि द्रव्यशतं मायात्तत्रैवैकप्रदेशके । मायात्कोटिशतं मायादपि कोटिसहस्रकम् ॥ ४४ ॥ अवगाहस्वभावत्वादन्तरिक्षस्य तत्समम् । चित्रत्वाच्च पुद्गलानां, परिणामस्य युक्तिमत् ॥ ४५ ॥ द्वयोरपि क्रमाद् दृष्टान्तौ—दीप्रदीपप्रकाशेन, यथाऽपवरकोदरम् । एकेनापि पूर्यते तच्छतमप्यत्र माति च ॥ ४६ ॥ तथा—विशल्यौषधसामर्थ्यात्पारदस्यैककर्षके । सुवर्णस्य

[1] लोकान्ते. ( लोगंसि ठिच्चा पभू अलोगंसि हत्थं वा० भग० ७७७ )

अनेकद्रव्यावगाहसिद्धिः

५

१०

१४

कर्षशतं, तौल्ये कर्षाधिकं न तत् ॥ ४७ ॥ पुनरौषधसामर्थ्यात्तद्द्रव्यं जायते पृथक् । सुवर्णस्य कर्षशतं, पारदस्यैककर्षकः ॥ ४८ ॥ इत्यर्थतो भगवतीशतक १३ उ० ४ वृत्तौ ॥ किंच—धर्मास्तिकायस्तद्देशास्तत्प्रदेश इति त्रयम् । एवं त्रयं त्रयं ज्ञेयमधर्माभ्रास्तिकाययोः ॥ ४९ ॥ तत्रास्तिकायः सकलस्वप्रदेशात्मको भवेत् । कियन्मात्रांशरूपाश्च, तस्य देशाः प्रकीर्त्तिताः ॥ ५० ॥ स्कन्दन्ति—शुष्यन्ति पुद्गलविचटनेन, धीयन्ते च—पुष्यन्ते पुद्गलचटनेनेति स्कन्धाः 'पृषोदराद्यः (३–२–१५५) इति रूपनिष्पत्तिः, इति प्रज्ञापनावृत्तौ व्युत्पादितत्वादेते स्कन्धव्यपदेशं नार्हन्ति, अत एव सूत्रे प्रायः 'धम्मत्थिकाए धम्मत्थिकायस्स देसे' इत्याद्येव श्रूयते ॥ नवतत्त्वावचूरौ तु चतुर्दशरज्ज्वात्मके लोके सकलोऽपि यो धर्मास्तिकायः स सर्वः स्कन्धः कथ्यते इत्युक्तमितिज्ञेयं । निर्विभागा विभागाश्च, प्रदेशा इत्युदाहृताः । ते चानन्तास्तृतीयस्यासंख्येया आद्ययोर्द्वयोः ॥ ५१ ॥ अनन्तैश्चागुरुलघुपर्यायैः संश्रिता इमे । त्रयोऽपि यदमूर्त्तेषु, संभवन्त्येत एव हि ॥ ५२ ॥ अथ जीवास्तिकायस्य, स्वरूपं वच्मि तस्य च । चेतनालक्षणो जीव इति सामान्यलक्षणम् ॥ ५३ ॥ मतिश्रुतावधिमनःपर्यायकेवलान्यपि । मत्यज्ञानं श्रुताज्ञानं, विभङ्गज्ञानमित्यपि ॥ ५४ ॥ अचक्षुश्चक्षुरवधिकेवलदर्शनानि च । द्वादशामी उपयोगा, विशेषाज्जीवलक्षणम् ॥ ५५ ॥ उपयोगं विना कोऽपि, जीवो नास्ति जगत्-

२०

२५



१ उत्तराध्ययनबृहद्वृत्तौ धर्मास्तिकायादीनां स्कन्धता स्पष्टैव ( संयोगपदनिर्युक्तौ ) । प्रज्ञापनीया स्कन्धव्युत्पत्तिः पुद्गलस्कन्धप्रकरणगता, अनुयोगे तत्त्वार्थे च जीवराशेरपि स्कन्धतोक्ता । अन्यथा कायशब्दोऽपि चिन्त्य एव ।

त्रये। अक्षरानन्तभागो यद्व्यक्तो निगोदिनामपि ॥ ५६ ॥ तं चाक्षरानन्तभागमपि त्रैलोक्यवर्त्तिनः। न शक्नुवन्त्यावरितुं, पुद्गलाः कर्मतां गताः ॥ ५७ ॥ एषोऽप्याव्रियते चेत्तत्, स्याज्जीवाजीवयोर्न भित्। अक्षरं त्विह साकारेतरोपयोगलक्षणम् ॥ ५८ ॥ रवेर्यथाऽतिसान्द्राभ्रच्छन्नस्यापि भवेत्प्रभा। कियत्यनावृता रात्रि-दिनाभेदोऽन्यथा भवेत् ॥५९॥ इयं चाल्पीयसी ज्ञानमात्राऽऽद्यसमये भवेत्। अपर्याप्तनिगोदानां, सूक्ष्माणां क्रमतस्ततः ॥ ६० ॥ शेषैकाक्षद्वित्रिचतुष्पञ्चाक्षादिषु मात्रया। वर्धमानेन्द्रिययोगलब्धिवृद्धिव्यपेक्षया ॥ ६१ ॥ क्षयोपशमवैचित्र्यान्नानारूपाणि बिभ्रती। सर्वज्ञेयग्राहिणी स्याद्, घातिकर्मक्षयेण सा ॥ ६२ ॥ नन्वेवमात्मनो ज्ञानं, यदि लक्षणमुच्यते। अभेदः स्यात्तदनयोः, सास्नावृषभयोरिव ॥ ६३ ॥ एवं चास्य सदा ज्ञानमिष्यतेऽखिलवस्तुगम्। ज्ञानरूपो न जानातीत्येतद्युक्तिसहं न यत् ॥ ६४ ॥ कथं च ज्ञानरूपस्यात्मनः स्युः संशयस्तथा। अव्यक्तबोधाबोधौ च, किञ्चिद्बोधविपर्ययाः ? ॥ ६५ ॥ अत्रोच्यते–सत्यप्यस्य चिदात्मत्वे, नोपयोगो निरन्तरम्। भवत्यावरणीयानां, कर्मणां वशतः खलु ॥ ६६ ॥ तथाहि–आत्मा सर्वप्रदेशेषु, त्यक्त्वांशानष्टमध्यगान्। प्रक्वथ्यमानोदकवत्सदा विपरिवर्त्तते ॥ ६७ ॥ ततः स चिरमेकस्मिन्न वस्तुन्युपयुज्यते। अर्थान्तरोपयुक्तः स्याच्चपलः कृकलासवत् ॥ ६८ ॥ उत्कर्षेणोपयोगस्य, कालोऽप्यान्तर्मुहूर्त्तिकः। उप-

१ सुयकेवलक्खराणं ( ४९६ वि० ) तस्स उ अणंतभागो ( ४९१ वि० )। २ लब्ध्या। ३ जघन्ययोगिनां। ४ अंशेन। ५ ज्ञानात्मनोः ६ कम्बल० ७ नाविर्भावेन. ८ केवलिनामप्यात्मप्रदेशानां चलत्वाच्चिन्त्यमेतत्।

अक्षरानन्तभागोद्घाटः

५

१०

१५

योगान्तरं याति, स्वभावात्तदनन्तरम् ॥ ६९ ॥ न सर्वमपि वेत्त्येष, प्राणी कर्मावृतो यथा । नार्कस्याभ्राभिभूतस्य, प्रसरन्त्यभितः प्रभाः ॥ ७० ॥ संशयाव्यक्तबोधाद्या, अप्यस्य कर्मणां वशात् । कुर्वतां ज्ञानवैचित्र्यं, क्षयोपशमभेदतः ॥ ७१ ॥ किंच—आभोगानाभोगोद्भववीर्यवतो यदा क्षयोपशमः । लब्धिकरणानुरूपं तदाऽऽत्मनो ज्ञानमुद्भवति ॥ ७२ ॥ वीर्यापगमे च पुनस्तदेव कर्मावृणोत्यपाकीर्णम् । शैवलजालमिवाम्भो दर्पणमिव विमलितं पङ्कः ॥ ७३ ॥ अथ प्रकृतं—द्विधा भवन्ति ते जीवाः, सिद्धसंसारिभेदतः । सिद्धाः पञ्चदशविधास्तीर्थातीर्थादिभेदतः ॥ ७४ ॥ यदाहुः—जिण १ अजिण २ तित्थ ३ तित्था ४ गिहि ५ अन्न ६ सलिंग ७ थी ८ नर ९ नपुंसा १० । पत्तेय ११ सयंबुद्धा १२ बुद्धबोहिक्कणिका य १३ १४ १५ ॥ १ ॥ जीवन्तीति स्मृता जीवा, जीवनं प्राणधारणम् । ते च प्राणा द्विधा प्रोक्ता, द्रव्यभावविभेदतः ॥ ७५ ॥ सिद्धानामिंद्रियोच्छ्वासादयः प्राणा न यद्यपि । ज्ञानादिभावप्राणानां, योगाज्जीवास्तथाप्यमी ॥ ७६ ॥

२०

---

१ वीर्यं द्विधा-लब्धेः करणाच्च २ ज्ञानं ३ कर्मरहितं ४ धर्माधर्मान्तरिक्षाणामिव जीवस्य नाभिगाः । अष्टौ मध्यप्रदेशाः स्युः, कर्मांशैस्ते त्वनावृताः ॥ ७२ ॥ तथोक्तं—"तदनेन पञ्चदशविधेनापि योगेनात्माऽष्टौ प्रदेशान् विहाय तप्तभाजनोदकवद् उद्वर्त्तमानैः सर्वैरात्मप्रदेशैरात्मप्रदेशावष्टब्धाकाशप्रदेशस्थं कार्मणशरीरयोग्यं कर्मदलिकं यद्बध्नाति तत्प्रयोगकर्मेत्युच्यते इत्याचारांगे द्वितीयस्य लोकविजयाध्ययनस्यादौ निर्युक्तिवृत्तौ, अयमेवार्थो भगवत्यां श. २५ उ. ४ । श. ८ उ. ९ अपि । तत्त्वार्थभाष्यवृत्तौ द्वितीयाध्यायप्रारंभे, ज्ञानदीपिकायां च इति प्र. अधिकं ।

२५



२८

अलोकस्खलिताः सिद्धा, लोकाग्रे च प्रतिष्ठिताः । इह संत्यज्य देहादि, स्थितास्तत्रैव शाश्वताः ॥ ७७ ॥ ते ज्ञानावरणीयाद्यैर्मुक्ताः कर्मभिरष्टभिः । ज्ञानदर्शनचारित्राद्यनन्ताष्टकसंयुताः ॥ ७८ ॥ तथोक्तं गुणस्थानक्रमारोहे–अनन्तं केवलज्ञानं, ज्ञानावरणसंक्षयात् । अनन्तं दर्शनं चापि, दर्शनावरणक्षयात् ॥ ७९ ॥ क्षायिके शुद्धसम्यक्त्व–चारित्रे मोहनिग्रहात् । अनन्ते सुखवीर्ये च, वेद्यविघ्नक्षयात् क्रमात् ॥ ८० ॥ आयुषः क्षीणभावत्वात्, सिद्धानामक्षया स्थितिः । नामगोत्रक्षयादेवा–मूर्त्तानन्ताऽवगाहना ॥ ८१ ॥ रोगमृत्युजराधर्त्ति–हीना अपुनरुद्भवाः । अभावात्कर्महेतूनां, दग्धे बीजे हि नाङ्कुरः ॥ ८२ ॥ यावन्मात्रं नरक्षेत्रं, तावन्मात्रं शिवास्पदम् । यो यत्र म्रियते तत्रै–वोदूर्ध्वं गत्वा स सिद्ध्यति ॥ ८३ ॥ उत्पत्योदूर्ध्वं समश्रेण्या, लोकान्तस्तैरलङ्कृतः । यत्रैकस्तत्र तेऽनंता, निर्बाधाः सुखमासते ॥ ८४ ॥ तथोक्तं तत्त्वार्थभाष्ये–कृत्स्नकर्मक्षयादूर्ध्वं, निर्वाणमधिगच्छति । यथा दग्धेन्धनो वह्नि–र्निरुपादानसंततिः ॥ ८५ ॥ तदनन्तरमेवोर्द्ध्व–मालोकान्तात्स गच्छति । पूर्वप्रयोगाऽसङ्गत्वबंधच्छेदोर्द्ध्वगौरवैः ॥ ८६ ॥ कुलालचक्रे दोलाया–मिषौ चापि यथेष्यते । पूर्वप्रयोगात्कर्मेह, तथा सिद्धगतिः स्मृता ॥ ८७ ॥ मृल्लेपसङ्गनिर्मोक्षा–द्यथा दृष्टाऽप्स्वलाम्बुनः । कर्मसङ्गविनिर्मोक्षा–त्तथा सिद्धगतिः स्मृता ॥ ८८ ॥ एरण्डयन्त्रपेडासु, बन्धच्छेदाद्यथा गतिः । कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथेष्यते ॥ ८९ ॥ व्याघ्रपादबीजबन्धनच्छेदाद्यन्त्रबन्धनच्छेदात्पेडाबन्धनच्छेदाच्च गतिर्दृष्टा मिञ्जाकाष्ठपेडापुटानामेवं कर्मबन्धविच्छेदात्सिद्धस्य गतिरिति भावः ॥–ऊर्द्ध्वगौरवधर्माणो,

सिद्धस गुणा गतिश्च

५

१०

१४

जीवा इति जिनोत्तमैः । अधोगौरवधर्माणः, पुद्गला इति चोदितम् ॥ ९० ॥ ऊर्द्ध्वगमन एव गौरवं धर्मः-स्वभावो जीवानां, पुद्गलास्त्वधोगमनधर्माण इति सर्वज्ञवचनमिति भावः । यथाऽधस्तिर्यगूर्द्ध्वं च, लोष्टवाय्वग्निवीचयः । स्वभावतः प्रवर्त्तन्ते, तथोर्द्ध्वगतिरात्मनः ॥९१॥ अतस्तु गतिवैकृत्य-मेषां यदुपलभ्यते । कर्मणः प्रतिघाताच्च, प्रयोगाच्च तदिष्यते॥९२॥अधस्तिर्यगथोर्द्ध्वं च, जीवानां कर्मजा गतिः । ऊर्द्ध्वमेव तु तद्धर्मा, भवति क्षीणकर्मणाम्॥९३॥तत्रापि गच्छतः सिद्धिं, संयतस्य महात्मनः । सर्वैरङ्गैर्विनिर्याति, चेतनस्तनुपञ्जरात् ॥९४॥ तदुक्तं स्थानाङ्गपञ्चमस्थानके-"पंचविहे जीवस्स णिज्जाणमग्गे पं०, तं०-पाएहिं १, उरूहिं २, उरेणं ३, सिरेणं ४, सव्वंगेहिं ५, पाएहिं निज्जायमाणे निरयगामी भवति, उरूहिं निज्जायमाणे तिरियगामी भवति, उरेणं निज्जायमाणे मणुयगामी भवति, सिरेणं निज्जायमाणे देवगामी भवति, सव्वंगेहिं णिज्जायमाणे सिद्धिगतिपज्जवसाणे पण्णत्ते" । भवोपग्राहिकर्मान्त-क्षण एव स सिद्ध्यति । उद्गच्छन्नस्पृशद्गत्या, ह्यचिन्त्या शक्तिरात्मनः ॥ ९५ ॥ अत्र च अस्पृशन्ती सिद्ध्यन्तरालप्रदेशान् गतिर्यस्य सोऽस्पृशद्गतिः, अन्तरालप्रदेशस्पर्शने हि नैकेन समयेन सिद्धिः, इष्यते च तत्रैक एव समयः, अतोऽन्तराले समयान्तरस्याभावादन्तरालप्रदेशानामसंस्पर्शनमित्यौपपातिकवृत्तौ । अवगाढप्रदेशेभ्योऽपराकाशप्रदेशांस्त्वस्पृशन् गच्छतीति महाभाष्यवृत्तौ ।

१ सामान्येन जीवानां शरीरिणां परप्रयुक्तजीवानाम् २ अवगाहनापेक्षया पूर्वे गमनापेक्षया उत्तरे वाऽन्तःपात्यसौ, स्पर्शवदभावात्,

सर्वाङ्गनिर्याणं अस्पृशद्गतिः

१५

२०

२५

यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशानूर्द्ध्वमप्यवगाहमानो गच्छतीति पञ्चसंग्रहवृत्तौ। तदत्र तत्त्वं केवलिगम्यम्। एकस्मिन्समये चोर्द्ध्व-लोके चत्वार एव ते। सिद्ध्यन्त्युत्कर्षतो दृष्ट-मधोलोके मतत्रयम् ॥ ९६ ॥ विंशतिर्द्वाविंशतिश्च, चत्वारिंशदिति स्फुटम्। उत्तराध्ययने संग्र-हण्यां च सिद्धप्राभृते ॥ ९७ ॥ 'वीस अहे तहेवेति' उत्तराध्ययने जीवाजीवविभक्त्यध्ययने। 'उड्ढोतिरियलोए चउबावीसट्ठसयं' इति संग्रहण्यां। 'वीसपुहुत्तं अहोलोए' इति सिद्धप्राभृते, तट्टीकायां विंशतिपृथक्त्वं-द्वे विंशती इति ॥ अष्टोत्तरशतं तिर्यग्-लोके च द्वौ पयोनिधौ। नदीनदादिके शेष-जले चोत्कर्षतस्त्रयः ॥ ९८ ॥ विंशतिश्चैकविजये, चत्वारो नन्दने वने। पण्डके द्वावष्टशतं, प्रत्येकं कर्मभूमिषु ॥ ९९ ॥ प्रत्येकं संहरणतो, दश कर्ममहीष्वपि। पञ्च चापशतोच्चौ द्वौ, चत्वारो द्विकराङ्गकाः ॥१००॥ जघन्योत्कृष्टदेहानां, मानमेतन्निरूपितम्। मध्याङ्गास्त्वेकसमये, सिद्ध्यन्त्यष्टोत्तरं शतम् ॥ १०१ ॥ उत्सर्पिण्यवसर्पिण्यो-स्तार्त्तीयीकतुरीययोः। अरयोरष्टसहितं, सिध्यन्त्युत्कर्षतः शतम् ॥ २ ॥ यत्त्वस्या अवसर्पिण्यास्तृतीयारकप्रान्ते श्रीऋषभदेवेन सहाष्टोत्तरं शतं सिद्धास्तदाश्चर्यमध्येऽन्तर्भवतीति समाधेयं।-विंशतिश्चावसर्पिण्याः, सिद्ध्यन्ति पञ्चमेऽरके। उत्सर्पिण्यवसर्पिण्योः, शेषेषु दश संहृताः ॥३॥ पुंवेदेभ्यः सुरादिभ्य-श्च्युत्वा जन्मन्यनन्तरे। भवन्ति पुरुषाः केचित्, स्त्रियः केचिन्नपुंसकाः ॥३॥ स्त्रीभ्योऽपि देव्यादिभ्यः स्यु-रेवं त्रेधा महीस्पृशः। क्लीबेभ्यो नारकादि-

ऊर्ध्वलोकादौ सिद्ध-संख्या ५ १० १३

१ दोवीसन्ति पाठे मतत्रयी २ उत्कृष्टावगाहनास्ते यतः, उत्कृष्टावगाहनापेक्षयैवाश्चर्यरूपत्वात्, मध्याङ्गानां त्वष्टशतस्य सिद्धिः स्यादेव,

भ्योऽप्येवं स्युर्मनुजास्त्रिधा ॥४॥ नवस्वेतेषु भङ्गेषु, पुम्भ्यः स्युः पुरुषा हि ये । सिद्ध्यन्त्यष्टोत्तरशतं, तेऽन्ये दश
दशाखिलाः॥५॥दशान्यभिक्षुनेपथ्या–श्चत्वारो गृहिवेषकाः। सिद्ध्यन्त्यष्टोत्तरशतं, मुनिनेपथ्यधारिणः॥६॥विंश-
तिर्योषितः किंच, पुमांसोऽष्टोत्तरं शतम् । एकस्मिन्समये क्लीबाः, सिद्ध्यन्ति दश नाधिकाः ॥ ७ ॥ एकसमये
अष्टोत्तरशतसिद्धियोग्यतासंग्रहश्चैवं–तिर्यग्लोके क्षपितकलुषाः कर्मभूमिस्थलेषु, जाता वैमानिकपुरुषतो
मध्यमाङ्गप्रमाणाः । सिद्ध्यन्त्यष्टाधिकमपि शतं साधुवेषाः पुमांस–स्तार्त्तीयीके नियतमरके चिन्त्यतां वा
तुरीये ॥ ८ ॥ यत्रैको निर्वृतः सिद्ध–स्तत्रान्ये परिनिर्वृताः । अनन्ता नियमाल्लोक–पर्यन्तस्पर्शिनः समे ॥ ९ ॥
अयमर्थः–संपूर्णमेकसिद्धस्यावगाहक्षेत्रमाश्रिताः । अनन्ताः पुनरन्ये च, तस्यैकैकं प्रदेशकम् ॥ १० ॥ समा-
क्रम्यावगाढाः स्युः, प्रत्येकं तेऽप्यनन्तकाः । एवं परे द्वित्रिचतुःपञ्चाद्यंशाभिवृद्धितः ॥ ११ ॥ तथा–सिद्धाव-
गाहक्षेत्रस्य, तस्यैकैकं प्रदेशकम् । त्यक्त्वा स्थितास्तेऽप्यनन्ता, एवं द्व्यादिप्रदेशकान् ॥ १२ ॥ एवं च–प्रदेश-
वृद्धिहानिभ्यां, येऽवगाढा अनन्तकाः । पूर्णक्षेत्रावगाढेभ्यः, स्युस्तेऽसङ्ख्यगुणाधिकाः ॥ १३ ॥ ततश्च–एकः
सिद्धः प्रदेशैः स्वैः, समग्रैरतिनिर्मलैः । सिद्धाननन्तान् स्पृशति, व्यवगाढैः परस्परम् ॥ १४ ॥ तेभ्योऽसङ्ख्य-
गुणान् देश–प्रदेशैः स्पृशति ध्रुवम् । क्षेत्रावगाहनाभेदै–रन्यान्यैः पूर्वदर्शितैः ॥ ११५ ॥ तथोक्तं प्रज्ञापना-
यामौपपातिके आवश्यके च–फुसइ अणंते सिद्धे, सव्वपएसेहिं नियमसो सिद्धो । तेवि असंखिज्ज-
गुणा, देसपएसेहिं जे पुट्ठा ॥ १ ॥ अशरीरा जीवघना, ज्ञानदर्शनशालिनः । साकारेण निराकारे–

२०

२५

॥ १४ ॥

सिद्धानां संस्थानं

णोपयोगेन लक्षिताः ॥ १६ ॥ ज्ञानेन केवलेनैते, कलयन्ति जगत्त्रयीम् । दर्शनेन च पश्यन्ति, केवलेनैव केवलम् ॥ १७ ॥ पूर्वभवाकारस्या-न्यथाव्यवस्थापनाच्छुषिरपूर्त्त्या । संस्थानमनित्थंस्थं, स्यादेषामनियताकारम् ॥ १८ ॥ केनचिद्लौकिकेन, स्थितं प्रकारेण निगदितुमशक्यम् । अत एव व्यपदेशो, नैषां दीर्घादिगुणवचनैः ॥ १९ ॥ तथाहुः-'से न दीहे, से न हस्से, न वट्टे'इत्यादि । संस्थानं ह्याकारः, स कथममूर्त्तस्य भवति सिद्धस्य? । (अत्रोच्यते) परिणामवत्यमूर्त्तेऽप्यसौ भवेत्कुम्भनभसीव ॥ २० ॥ पूर्वभवभाविदेहाकारमपेक्ष्यैव सिद्धजीवस्य । संस्थानं स्यादौपा-धिकमेव न वास्तवं किञ्चित् ॥ २१ ॥ तथाहुरावश्यकनिर्युक्तिकृतः-ओगाहणाइ सिद्धा, भवत्तिभागेण हुंति परिहीणा । संठाणमणित्थंथं, जरामरणविप्पमुक्काणं ॥१॥ उत्ताणओ व पासिल्लओ व अहवा निसन्नओ चेव । जो जह करेइ कालं, सो तह उववज्जए सिद्धो ॥ २ ॥ इहभवभिन्नागारो, कम्मवसाओ भवंतरे होइ । न य तं सिद्धस्स तओ, तंमि ठितो से तयागारो ॥३॥ जं संठाणं तु इहं, भवं चयंतस्स चरमसमयंमि । आसी अ पएसघणं, तं संठाणं तहिं तस्स ॥ ४ ॥ शतानि त्रीणि धनुषां, त्रयस्त्रिंशद्धनूंषि च । धनुस्त्रिभागश्च परा, सिद्धानामवगाहना ॥ २२ ॥ जघन्याऽष्टाङ्गुलोपेतहस्तमाना प्ररूपिता । जघन्योत्कृष्टयोरन्तराले मध्या त्वनेकधा ॥ २३ ॥ षोडशाङ्गुलयुक्ता या, मध्या करच-

५ १० १२

१ संपूर्णा २ यथा तत्र घट उपाधिरेवमत्र अन्त्यभवशरीरं, तन्नाशानन्तरं च संस्थानपरावर्त्तकारणाभावात्, तदैवात्र त्रिभागोनाकारेण भवति ३ सिद्धतया भवति ४ कर्म

तुष्टयी। आगमे गीयते सर्व–मध्यानां सोपलक्षणम् ॥ २४ ॥ प्राच्ये जन्मनि जीवानां, या भवेदवगाहना। तृतीयभागन्यूना सा, सिद्धानामवगाहना ॥ २५ ॥ उत्कृष्टा च भवे प्राच्ये, धनुःपञ्चशती मिता। मध्यमा च बहुविधा, जघन्या हस्तयोर्द्वयम् ॥ २६ ॥ जघन्या सप्तहस्तैव, जिनेन्द्राणामपेक्षया। त्र्यंशोनत्वे किलैतासां, ताः स्युः सिद्धावगाहनाः ॥ २७ ॥ एतदभिप्रेत्यैवौपपातिकोपाङ्गे उक्तं–"जीवा णं भंते! सिज्झमाणा कयरंमि उच्चत्ते सिज्झंति?, गोयमा! जहण्णेणं सत्तरयणीए, उक्कोसेणं पंचधणुसइए सिज्झंति"। मरुदेवा कथं सिद्धा, नन्वेवं जननी विभोः?। साग्रपञ्चचापशतो–त्तुङ्गा नाभिसमोच्छ्रया ॥ २८॥ 'संघयणं संठाणं, उच्चत्तं चेव कुलगरेहिं समं' इतिवचनात्, अत्रोच्यते–स्त्रियो ह्युत्तमसंस्थानाः, पुंसः कालाद्दसंस्थितेः। किञ्चिदूनप्रमाणाः स्युर्नाभेरूनोच्छ्रयेति सा ॥ २९॥ गजस्कन्धाधिरूढत्वान्मनाक्संकुचितेति वा। पञ्चचापशतोच्चैव, सेति किञ्चिन्न दूषणम् ॥ ३० ॥–अयं च भाष्यकृदभिप्रायः। संग्रहणीवृत्त्यभिप्रायस्त्वयं–यदिदमागमे पञ्चधनुःशतान्युत्कृष्टं मानमुक्तं तद्बाहुल्यात्, अन्यथैतद् धनुःपृथक्त्वैरधिकमपि स्यात्, तच्च पञ्चविंशत्यधिकपञ्चधनुःशतरूपं बोद्धव्यं, सिद्धप्राभृतेऽप्युक्तं–"ओगाहणा जहण्णा, रयणिदुगं अह पुणाइ उक्कोसा। पंचेव धणुसयाइं, धणुअपुहुत्तेण अहियाइंति ॥ १ ॥ एतद्वृत्तिश्च–पृथक्त्वशब्दोऽत्र बहुत्ववाची,

२० ॥ १५ ॥ २४

१ तीर्थकरानाश्रित्य सा, यतो जघन्यतस्ते सप्तकरा एव २ अवगाहनानां ३ पूर्वोक्ताः ४ भाष्यं मरुदेवाश्रितं, एतत्तु ऊर्ध्वबाहूत्कृष्टतनोः

बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्यमिति"। आद्यसंहनना एव, सिद्ध्यन्ति न पुनः परे। संस्थानानां त्वनियम-
स्तेषु षट्स्वपि निर्वृतिः ॥ ३१ ॥ पूर्वकोट्यायुरुत्कर्षात्, सिद्ध्येन्नाधिकजीवितः । जघन्यान्नववर्षायुः, सिद्ध्येन्न
न्यूनजीवितः ॥ ३२ ॥ द्वात्रिंशदन्ता एकाद्या-श्चेत्सिद्ध्यन्ति निरन्तरम्। तदाऽष्ट समयान् याव-न्नवमे त्वन्तरं
ध्रुवम् ॥ ३३ ॥ अष्टचत्वारिंशदन्ता-स्त्रयस्त्रिंशन्मुखा यदि । सिद्ध्यन्ति समयान् सप्त, ध्रुवमन्तरमष्टमे ॥३४॥
एकोनपञ्चाशदाद्याः, षष्ट्यन्ता यदि देहिनः । सिद्ध्यन्ति समयान् षट् वै, सप्तमे त्वन्तरं भवेत् ॥ ३५ ॥
एकषष्टिप्रभृतयो, यावद् द्वासप्ततिप्रमाः। सिद्ध्यन्ति समयान् पञ्च, षष्ठे त्ववश्यमन्तरम् ॥ ३६ ॥ त्रिसप्त-
तिप्रभृतयश्चतुरशीतिसीमकाः । चतुरः समयान् यावत्, सिद्ध्यन्त्यग्रेतनेऽन्तरम् ॥ ३७ ॥ पञ्चाशीत्याद्याः
क्षणांस्त्रीन्, यान्त्याषण्णवतिं शिवम्। क्षणौ सप्तनवत्याद्या, द्वौ च द्व्याढ्यशतावधि ॥ ३८ ॥ त्र्याधिकशता-
द्याश्चे-द्यावदष्टोत्तरं शतम्। सिद्ध्यन्ति चैकसमयं, द्वितीयेऽवश्यमन्तरम् ॥ ३९ ॥ जघन्यमन्तरं त्वेक-समयं
परमं पुनः। षण्मासान् नास्ति सिद्धानां, च्यवनं शाश्वता हि ते ॥४०॥ सर्वस्तोकाः क्लीबसिद्धास्तेभ्यः सङ्ख्य-
गुणाधिकाः। स्त्रीसिद्धाः पुनरेभ्यः पुं-सिद्धाः सङ्ख्यगुणाधिकाः ॥ ४१ ॥ सर्वस्तोका दक्षिणस्यामुदीच्यां च
मिथः समाः। प्राच्यां संख्यगुणाः पश्चि-मायां विशेषतोऽधिकाः ॥ ४२ ॥ न तत्सुखं मनुष्याणां, देवाना-
मपि नैव तत्। यत्सुखं सिद्धजीवानां, प्राप्तानां पदमव्ययम् ॥ ४३ ॥ त्रैकालिकानुत्तरान्तनिर्जराणां त्रिका-
लजम्। भुक्तं भोग्यं भुज्यमान-मनन्तं नाम यत्सुखम् ॥ ४४ ॥ पिण्डीकृतं तदेकत्रानन्तैर्वर्गैश्च वर्गितम्।

अन्तरम-
ल्पबहुत्वं
सुखं च

५

१०

१४

शिवसौख्यस्य समतां, लभते न कदाचन ॥ ४५ ॥ सर्वाद्धापिण्डितः सिद्ध–सुखराशिर्विकल्पतः । अनन्तवर्गभक्तोऽपि, न मायाद् भुवनत्रये ॥४६॥ वर्गविभागश्चैवं–स्युः षोडश चतुर्भक्ताश्चत्वारो वर्गभागतः । द्वावेव परिशिष्येते, चत्वारोऽपि द्विभाजिताः ॥ ४७ ॥ सुखस्य तस्य माधुर्यं, कलयन्नपि केवली । वक्तुं शक्नोति नो जग्धगुडादेर्मूकदेहिवत् ॥ ४८ ॥ यथेप्सितान्नपानादि–भोजनानन्तरं पुमान् । तृप्तः सन् मन्यते सौख्यं, तृप्तास्ते सर्वदा तथा ॥ ४९ ॥ एवमापातमात्रेण, दर्श्यते तन्निदर्शनम् । वस्तुतस्तु तदाह्लादोपमानं नास्ति विष्टपे ॥ ५० ॥ औपम्यस्याप्यविषयस्ततः सिद्धसुखं खलु । यथा पुरसुखं जज्ञे, म्लेच्छवाचामगोचरः ॥ ५१ ॥ तथा चाहुः—

म्लेच्छः कोऽपि महारण्ये, वसति स्म निराकुलः । अन्यदा तत्र भूपालो, दुष्टाश्वेन प्रवेशितः ॥ ५२ ॥ म्लेच्छेनासौ नृपो दृष्टः, सत्कृतश्च यथोचितम् । प्रापितश्च निजं देशं, सोऽपि राज्ञा निजं पुरम् ॥ ५३ ॥ ममायमुपकारीति, कृतो राज्ञाऽतिगौरवात् । विशिष्टभोगभूतीनां, भाजनं जनपूजितः ॥ ५४ ॥ तुङ्गप्रासादशृङ्गेषु, रम्येषु काननेषु च । वृतो विलासिनीवृन्दै–र्भुङ्क्ते भोगसुखान्यसौ ॥ ५५ ॥ अन्यदा प्रावृषः प्राप्तौ, मेघाडम्बरमम्बरे । दृष्ट्वा मृदङ्गमधुरै–र्गर्जितैः केकिनर्त्तनम् ॥ ५६ ॥ जातोत्कण्ठो दृढं जातोऽरण्यवासगमं प्रति । विसर्जितश्च राज्ञाऽपि, प्राप्तोऽरण्यमसौ ततः ॥ ५७ ॥ पृच्छन्त्यरण्यवासास्तं, नगरं तात! कीदृशम् । परं नगरवस्तूनामुपमाया अभावतः ॥ ५८ ॥ न शशाकतमां तेषां, गदितुं स कृतोद्यमः । एवमत्रोपमाऽभावात्, वक्तुं शक्यं न तत्सुखम् ॥ ५९ ॥ सिद्धा बुद्धा गताः पारं, परं पारङ्गता अपि । सर्वामनागतामद्धां,



२०

२५
॥ १६ ॥

२८

तिष्ठन्ति सुखलीलया ॥ ६० ॥ अरूपा अपि प्रासरूपप्रकृष्टा, अनङ्गाः स्वयं ये त्वनङ्गद्रुहोऽपि । अनन्ताक्ष-राश्योज्झिताशेषवर्णाः, स्तुमस्तान् वचोऽगोचरान् सिद्धजीवान् ॥ ६१ ॥ इति सिद्धाः ॥ विश्वाश्चर्यदकीर्त्ति-कीर्त्तिविजयश्रीवाचकेन्द्रान्तिप-द्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गो निर्गलितार्थसार्थसुभगः पूर्णो द्वितीयः सुखम् ॥ ६२ ॥

॥ इति लोकप्रकाशे द्वितीयः सर्गः समाप्तः ॥ (ग्रन्थाग्रं २०२-१०)

## ॥ तृतीयः सर्गः प्रारभ्यते ॥

भेदादीनि द्वाराणि

अथ संसारिजीवानां, स्वरूपं वर्णयाम्यहम् । द्वारैः सप्तत्रिंशता ता-न्यमूनि स्युर्यथाक्रमम् ॥ १ ॥ भेदाः १ स्थानानि २ पर्याप्तिः ३, सङ्ख्ये योनिकुलाश्रिते ४-५ । योनीनां संवृतत्वादि, ६, स्थिती च भवकाययोः ८॥ २॥ देहसंस्थानाङ्गमान-समुद्घाता ९-१०-११-१२ गतागती १३-१४ । अनन्तराप्तिः १५ समये, सिद्धिर्लेश्या १७ दिगाहृतौ १८॥३॥ संहननानि १९ कषायाः २० संज्ञेन्द्रियसंज्ञितास्तथा २३ वेदाः २४ । दृष्टिर्ज्ञानं २६ दर्शन-मुपयोगाहारगुणयोगाः ३१ ॥ ४ ॥ मानं ३२ लघ्वल्पबहुता ३३, सैवाऽन्या दिगपेक्षया ३४ । अन्तरं ३५ भवसंवेधो ३६, महाल्पबहुताऽपि ३७ च ॥ ५ ॥ भेदा इह प्रकाराः स्युर्जीवानां स्वस्वजातिषु १ । समुद्घात-

५ १० १२

निजस्थानो–पपातैः स्थानकं त्रिधा २ ॥ ६ ॥ पर्याप्ता व्यपदिश्यन्ते, याभिः पर्याप्तयस्तु ताः । पर्याप्तापर्याप्तभेदा–दत एव द्विधाऽङ्गिनः ॥ ७ ॥ पर्याप्तयः स्वयोग्या यैः, सकलाः साधिताः सुखम् । पर्याप्तनामकर्मानु–भावात्पर्याप्तकास्तु ते ॥ ८ ॥ द्विधाऽमी लब्धिकरण–भेदात्तत्रादिमास्तु ये । समाप्य स्वार्हपर्याप्तीर्म्रियन्ते नान्यथा ध्रुवम् ॥ ९ ॥ करणानि शरीराक्षा–दीनि निर्वर्त्तितानि यैः । ते स्युः करणपर्याप्ताः, करणानां समर्थनात् ॥ १० ॥ अपर्याप्ता द्विधा प्रोक्ता, लब्ध्या च करणेन च । द्वयोर्विशेषं शृणुत, भाषितं गणधारिभिः ॥ ११ ॥ असमाप्य स्वपर्याप्ती–र्म्रियन्ते येऽल्पजीविताः । लब्ध्या ते स्युरपर्याप्ता, यथा निःस्वमनोरथाः ॥१२॥ निर्वर्त्तितानि नाद्यापि, प्राणिभिः करणानि यैः । देहाक्षादीनि[3] करणाऽपर्याप्तास्ते प्रकीर्त्तिताः ॥ १३ ॥ म्रियन्तेऽल्पायुषो लब्ध्य–पर्याप्ता इह येऽङ्गिनः । तेऽपि भूत्वैव करण–पर्याप्ता नान्यथा पुनः ॥ १४ ॥ याऽऽहारादि–पुद्गलानामादानपरिणामयोः । जन्तोः पर्याप्तिनामोत्था, शक्तिः पर्याप्तिरत्र सा ॥ १५ ॥ पुद्गलोपचयादेव, भवेत्सा सा च षड्विधा । आहाराङ्गेन्द्रियश्वासोच्छ्वासभाषामनोऽभिधाः ॥ १६ ॥ तत्रैषाऽऽहारपर्याप्तिर्यया ऽऽदाय निजोचितम् । पृथक्खलरसत्वेनाहारं परिणतिं नयेत् ॥ १७ ॥ वैक्रियाहारकौदारि–काङ्गयोग्यं यथोचितम् । तं रसीभूतमाहारं, यया शक्त्या पुनर्भवी ॥ १८ ॥ रसासृग्मांसमेदोऽस्थि–मज्जशुक्रादिधातु–

१ विहिते शरीराक्षाख्ये, करणे यैस्तु जन्तुभिः इति सम्यक्, करणापर्याप्तानामायुषोऽबन्धात् २ मरिष्यन्त्यल्पजीविताः ३ विरोधग्रस्त आदिशब्दः ४ जोएण कम्मएणं आहारेइ अणंतरं जीवो ।

पर्याप्तिस्वरूपं

२०

॥ १७ ॥
२४

पर्याप्ति-स्वरूपं

ताम् । नयेद्यथासंभवं सा, देहपर्याप्तिरुच्यते ॥ १९ ॥ युग्मम् ॥ धातुत्वेन परिणतादाहारादिन्द्रियोचितात् । आदाय पुद्गलांस्तानि, यथास्वं प्रविधाय च ॥ २० ॥ इष्टे तद्विषयज्ञप्तौ, यया शक्त्या शरीरवान् । पर्याप्तिः सेन्द्रियाह्वाना, दर्शिता सर्वदर्शिभिः ॥ २१ ॥ इति संग्रहणीवृत्त्यभिप्रायः । प्रज्ञापनाजीवाभिगमप्रवचनसारोद्धारवृत्त्यादिषु तु-यया धातुतया परिणमितमाहारमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्तिरित्येतावदेव दृश्यते इति ज्ञेयं । ययोच्छ्वासार्हमादाय, दलं परिणमय्य च । तत्तयाऽऽलम्ब्य मुञ्चेत्सोच्छ्वासपर्याप्तिरुच्यते ॥२२॥ ननु देहोच्छ्वासनाम-कर्मभ्यामेव सिध्यतः । देहोच्छ्वासौ किमेताभ्यां, पर्याप्तिभ्यां प्रयोजनम् ? ॥२३॥ अत्रोच्यते पुद्गलानां, गृहीतानामिहात्मना । साध्या परिणतिर्देह-तया तन्नामकर्मणा ॥२४॥ आरब्धाङ्गसमाप्तिस्तु, तत्पर्याप्त्या प्रसाध्यते । एवं भेदः साध्यभेदा-द्देहपर्याप्तिकर्मणोः ॥ २५ ॥ एवमुच्छ्वासलब्धिः स्यात्साध्या तन्नामकर्मणः । साध्यमुच्छ्वासपर्याप्तेस्तस्या व्यापारणं पुनः ॥ २६ ॥ सतीमप्युच्छ्वासलब्धिमुच्छ्वासनामकर्मजाम् । व्यापारयितुमीशः स्या-त्तत्पर्याप्त्यैव नान्यथा ॥ २७ ॥ सतीमपि शरक्षेप-शक्तिं नैव भटोऽपि हि । विना चापादानशक्तिं, सफलीकर्त्तुमीश्वरः ॥ २८ ॥ भाषार्हं दलमादाय, गीस्त्वं नीत्वाऽवलम्ब्य च । यया शक्त्या त्यजेत्प्राणी, भाषापर्याप्तिरित्यसौ ॥ २९ ॥ दलं लात्वा मनोयोग्यं, तत्तां नीत्वाऽवलम्ब्य च । यया मननशक्तः स्यान्मनःपर्याप्तिरत्र सा ॥ ३० ॥ म्रियन्ते येऽप्यपर्याप्ताः, पर्याप्तित्रयमादि-

१ करोतीन्द्रियनिर्वृत्तिं, रचनायाः फलं ज्ञानं, सामर्थ्यज्ञापनायेदं,

